स्मृतिरोधिना मम वियुक्तमिदं तमसा मनः। मनसिजेन सखे! प्रहरिष्यता धनुषि चूतशरश्च निवेशितः"। अत्र कण्वसुता शकुन्तलाप्रणयस्मृतिविरोधिना अज्ञानेन मम मनो वियुक्तमित्यदृष्टकृतं स्मरणम् न सदृशवस्तुदर्शनजन्यम्। चिन्ताजन्यम् यथा "पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्। अहो दृष्टं कालादपरमिव जातं वनमिदं निवेशः शैलानां तदिदमिति बुद्धिं जनयति,,। अत्र प्रत्यक्षेषु स्रोतस्तरुवनादिषु चिन्ताजन्यत्वात् चिन्तोद्भूतं स्मरणम् आदिग्रहणात् परप्रयत्नादपि यथा "दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन। स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता"। अत्र परप्रयत्नजन्यत्वात्तथात्वम्। प्रत्यभिज्ञानं यथा। "स्पर्शः पुरा परिचितो नियतं स एव संजीवनश्च मनसः परिमोहनश्च"। अत्र य एव पूर्व्वानुभूतः स एवैषः इति प्रत्यभिज्ञा स्मरणम्। स्वप्नरूपं यथा। नागानन्दे "अद्य खलु स्वप्ने जानामि सैव प्रियतमा अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा" जीमूतवाहनेन विदूषकसमीपे स्वप्नस्य वर्णनम्। स्वप्नप्रत्यभिज्ञयोः पूर्वानुभूतसंस्कारजातत्वात् स्मरणत्वम्।

१२१ स्वभावोक्तिः "नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या साऽलङ्कृतिर्मता" दण्डी "तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः"। "कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः। पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्"। "बध्नन्नङ्गेषु रोमाञ्चं कुर्व्वन् मनसि निर्वृतिम्। नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्त्तते"। "कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः। जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः"। "जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्। शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्"। इयं जातिरपि।

१२२ हेतुः "हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते १। हेतुहेतुमतोरैक्यवर्णनं हेतुरुच्यते२,,। "च० असावुदेति शीतांशुर्मानच्छेदेन सुभ्रुवाम्,,१। "लक्ष्मीविलासोभवतः कटाक्षावेक्षणं प्रभो!२।

१२३ हेत्वपह्नुतिः "युक्त्या स एव पूर्वश्चेदुच्यते हेत्वपह्नुतिः।" च० स एव धर्म्मनिह्नव एव। "नेन्दुस्तीव्रो न निशार्कः सिन्धोरौर्व्वोऽयमुत्थितः"। अन्येऽलङ्कारास्त्वेवानमूह्याः। देहभूषणानि च शिरस्त्रादीनि तानि च प्राधान्यादष्टौ "शिरस्त्रं मुकुटं हारः कुण्डलं चाङ्गदं तथा। कङ्कणं वलयञ्चैव मेखलेत्यष्टधा वरम्,,। वरं प्रधानं तेन अप्रधानानि पादकटकादीन्यपि। तत्र भूषणद्रव्याणि "पद्मरागश्च वज्रञ्च गोमेदो विजयस्तथा। मुक्ता वैदूर्य्यनीलानि तथा मरकतादयः। सुवर्णेनापि घटना सर्वेषामुपदृश्यते। प्रधानभूषणेष्वेवमप्रधाने न निश्चयः। प्रधानभूषणं प्रायः शिरसोऽङ्घ्रि विधीयते,,। भगु० "सुखदा मणयः शुद्धा दुःखदा दोषशालिनः" युक्तिक० नवालङ्कारधारणे विहितनक्षत्रादि यथा "रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु। गुरुशुक्रबुधाहेषु वस्त्रालङ्कारधारणम्" ज्योति० अत्रापवादः "उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मतौ। अनिष्टेष्वपि निर्द्दिष्टं वस्त्रालङ्कारधारणम्"। ६नायकयोरङ्गजादिभावभेदेषु ते च यथा "यौवने सत्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता। औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः। लीला विलासो विच्छित्तिर्व्विव्वोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः। विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्। हसितं चकितं केलिरित्यष्टादशसंख्यकाः। स्वभावजाश्च भावाद्यादश पुंसां भवन्त्यपि"। पूर्व्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति किन्तु सर्व्वेऽप्यमी नायिकाश्रिता एव विच्छित्ति विशेषं पुष्णन्ति" सा० द० उक्ताः। एषां लक्षणानि तत्तच्छब्दे वक्ष्यन्ते। ७अन्तगुरौ चतुष्कले"॥ ऽइत्याकारे गणभेदे च॥ [समर्थे धनादौ।

**अलङ्कुमारि** त्रि० अलंकुमार्य्यै तद्वरणाय। कुमारीभरण-

**अलङ्कृत** त्रि० अलम्+कृ—कर्म्मणि क्त। भूषिते मण्डिते। "अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्" सा० द० "सत्कृतालङ्कृतां कन्यां योददाति स कूकुदः" इत्यमरः।

**अलङ्कृति** स्त्री अलम्+कृ—भावे क्तिन्। १भूषणे करणे क्तिन्। २भूषणसाधने अलङ्कारशास्त्रोक्ते ३उपमाद्यलङ्कारे च "तददोषौ शब्दार्थावनलङ्कृती पुनःक्वापि" काव्य० प्र० "यो विद्वान् मन्यते काव्यं शब्दार्थावनलङ्कृती। असौ न मन्यते कस्मादनुष्णमनलङ्कृती" चन्द्रा०।

**अलङ्क्रिया** स्त्री अलम्+कृ—भावे श। भूषायाम्।

**अलङ्गामिन्** त्रि० अलं पर्य्याप्तं गच्छति णिनि स्त्रियां ङीप्। गमनसमर्थे रिपुं प्रति गन्तरि।

**अलङ्घनीय** त्रि० न लङ्घनीयः। अनतिक्रमणीये। "लङ्घितमितरा नाद्रौ नेदं सिन्धावगाधता। अलङ्घनीयताहेतुरुभयं तन्मनस्विनि" माघः।

**अलङ्घ्य** त्रि० न लङ्घ्यः । अनतिक्रमणीये । "विलङ्घितविषतो लोकानलङ्घ्यानलघीयसः" माघः ।

**अलजी** स्त्री अला पर्य्याप्ता सती जायते जन–ड गौरा० ङीष् । सुश्रुतोक्ते सन्धिगतरोगभेदे यथा । "पूयानसः सोपनाहः स्रावा पर्व्वणिकालजी । क्रमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव" । तल्लक्षणं तत्रैव "जाता सन्धौ शुक्लकृष्णेऽलजी स्यात्तस्मिन्नेवास्थापिता पूर्व्वलिङ्गैः" इति ।

**अलज्जा** स्त्री न लज्जा विरोधे न० त० । १धाष्ट्र्ये अभावे न०त० । २लज्जाभावे । न०ब० । ३लज्जाशून्ये त्रि० ।

**अलञ्जर** पु० अलं सामर्थ्यं जृणाति जॄ–अच् पृ० उत् । मणिके अलिञ्जरे बहुजलाधारे(जाला)स्वल्पसे पात्रे । [धमादौ ।

**अलञ्जीविक** त्रि० अलं जीविकायै ४त० । जीविकापर्य्याप्ते

**अलञ्जुष** त्रि० अलं जुष्यते कर्म्मणि बा०क । भक्षणपर्य्याप्ते मांसादौ । "अथ तच्छृतस्य परिशिनष्टि तदलञ्जुषम्" शत०ब्रा०"मांसं हि जीवाय भक्षणायालं पर्य्याप्तं भवति"भा०

**अलति** पु० अल–वा अतिच् । गीतिमातृकायाम् स्वरसाधनार्थे सारिगामादिस्वरभेदे तदुपक्रमेणैव हि गीतेः प्रारम्भात्तेषां गीतिमातृकात्वम् ।

**अलन्धन** त्रि०अलं प्रभूतं धनमस्यस्य अच् । पर्य्याप्तधने सम्पन्ने । "निरादिष्टधनश्चेत्तु प्रतिभूःस्यादलन्धनः" मनुः ।

**अलन्तराम्** अव्य० अलम्+अतिशये तरप् आमु । अलमर्थे पर्य्याप्त्यादावर्थे। "पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम्" माघः । एवं तमप् आमु । अलन्तमाम् तत्रैवार्थे अव्य० ।

**अलन्धूम** पु० अलमत्यर्थो धूमः । धूमसमूहे जटाध० । [श्रीधरः ।

**अलब्ध** त्रि० न लब्धः । प्राप्तभिन्ने "अलब्धस्य प्राप्तुरुपायो योगः"

**अलभ्य** त्रि० न लभ्यः । अप्राप्ये । "रोगे चालभ्ययोगे च सोमन्ते पुंसवेऽपि च । यद्ददाति समुद्दिष्टं पूर्व्वत्रापि न दुष्यति" कालमा० मरी० "अलभ्ययोगे पुनरप्राप्यसम्बन्धनिमित्ते अर्घोचान्दिवसे पूर्व्वत्र मलमासे" शु० त० रघु० ।

**अलम्** अव्य० अल–बा० अम् १भूषणे "जनयितीमलङ्कृते यः प्रश्रय इव श्रियम्" अस्य उपपदसंज्ञा अलङ्कृत्य "अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते" मनुः । २सामर्थ्ये शक्तौ "विनाशकादलमभूष्णु रिज्याये तपसः" सुतः "कथा हि अलु पापानामलमश्रेयसे यत" इति च माघः "वरेण शमितं लोकानलं दग्धुं हि तत्तपः" कुमा० ३पर्य्याप्तौ ४संपूर्णतायां ६प्राचुर्ये "प्रतिभूःस्याद् लन्धनः" मनुः अलमत्यस्य धनम् अच् बहुधनइत्यर्थः कुल्लु० । ७वारणे, "अलं विवादेन यथा श्रुतं त्वया" कुमा० "अलं विवादेन शमोविधीयताम्" महाना० ८निषेधे "आलयाले मिदं बध्योयत् स दारानपाहरत्" माघः ९निरर्थकत्वे १०अस्त्यर्थे ११अवधारणे १२अलमर्थे च मेदर० ॥ "विजयावेत्यलमन्वशाल्मुनिर्माम्" किरा० "अलं भूयः" मल्लि० । लस्य वा रः अरम् । तत्रार्थे अरङ्कृतशब्दे उदा० ।

**अलम्पशु** पु०अलं यज्ञे निरर्थः पशुः । "अपशस्ते पशौ "अलम्पशोरपशोश्च" कात्या० १९,१,४, पशुर्योऽयः सन् यो नाम पशुत्वविन्दते सोऽलम्पशुरपशुः" कर्क० ।

**अलम्पुरुषीण** पु० अलं समर्थः पुरुषाय "अषडक्षीणादिना" पा० खार्थे ख । युद्धादिसमर्थे प्रतिमल्लादौ पुरुषे ।

**अलम्बुद्धि** स्त्री अलम् व्यर्था बाधितविषयत्वात् पर्य्याप्ता वा बुद्धिः । मिथ्याबुद्धौ, पर्य्याप्तबुद्धौ च । "पश्यन्नपि नालम्बुद्धिमवाप" किरा० १२,२९, श्लोक०व्या० मल्लि० ।

**अलम्बुष** पु० अलं पुष्णाति पुष–क पृ०पस्य बः । १वमने छर्द्दने । २प्रहस्ते रावणमन्त्रिराक्षसे ३घटोत्कचहते राक्षसभेदे च "अलम्बुषं तथा युद्धे विचरन्तमभीतवत् । हैडिम्बिः प्रययौ तूर्णम्" इत्युपक्रम्य "रिपुं निहत्याभिननन्द वै तदा ह्यलम्बुषं पक्कमलम्बुषं यथा" भा०द्रो०प० । अलम्बुषनामानौ च द्वौ राक्षसौ कुरुक्षेत्रयुद्धे समागतौ अयमेको घटोत्कचेन निहतः भी०प० अपरोपि निहतः इत्यविरोधः । ४अप्सरोभेदे तच्छब्दे विवृतिः । ५मुण्डीर्याम् मेदि० ६लज्जालुलतायाम् ७अन्याप्रवेशार्थं दत्तजलरेखायाञ्च स्त्री राज० । तस्याः फलम् अण् लुप् तत्फले न० । "ह्यलम्बुषं पक्कमलम्बुषं यथा" भा०द्रो०प० ।

**अलम्भूष्णु** त्रि०अलम्+सामर्थ्ये भू-ग्स्नु । "समर्थे "विनाशकादलम्भूष्णु रिज्यायै तपसः सुतः" माघः ।

**अलय** पु०न लयः विरोधे न०त० । १लयविरोधिनि उद्भवे । "शक्रादिष्वपि लोकेषु श्रूयमाणौ लयालयौ" रामा० अभावे न०त० । २विनाशाभावे । नास्ति लयोयस्य ३अवस्थानशून्ये भ्रमणशीले "स्थानमानमति कान्तिमालया" माघः "नास्ति लयनं कचिदवस्थानं नास्ति यस्याः" मल्लि० ४विनाशशून्ये च त्रि० ।

**अलम्बुसा** पु० ब०व० । देशभेदे ।

**अलर्क** पु० अलमर्कतेऽर्च्यते वा अर्क–अच् अर्च–घञ् वा शक० । १श्वेतार्कवृक्षे २क्षिप्तकुक्कुरे ३क्रमिभेदे च स च भा०शा०प० दर्शितः यथा "अथ क्रमिः श्लेष्ममेदोमांसशोणितभोजनः । दारुणो दारुणस्पर्शः कर्णस्याभ्यासमागतः । स तस्योरु-

मथासाद्य बिभेद रुधिराशनः। न चैनमशकत् त्येक्तुं हन्तुं वापि गुरोर्भयात्। स दश्यमानस्तु तथा कृमिणा तेन भारत!। गुरोः प्रबोधनाशङ्की तमुपैक्षत सूर्य्यजः। कर्णस्तु वेदनां धैर्य्यादसह्यां विनिगृह्य ताम्। अकम्पयन्नव्यथयन् धारयामास भार्गवम्। तदास्य रुधिरेणाङ्गं परिस्पृष्टं भृगूद्वहः। तदाऽबुध्यत तेजस्वी सन्त्रस्तश्चेदमब्रवीत्। अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया। कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम। तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम्। ददर्श रामस्तं चापि कृमिं शूकरसन्निभम्। अष्टपादन्तीक्ष्णदंष्ट्रं सूचिभिरिव संवृतम्। रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः। स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत्। तस्मिन्नेवासृजि क्लिन्नस्तदद्भुतमिवाभवत्। ततोऽन्तरीक्षे ददृशे विश्वरूपः करालवान्। राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः। स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः। स्वस्ति ते भृगुशार्दूल। गमिष्यामि यथागतम्। मोक्षितो नरकादस्माद्भवता मुनिसत्तम!। भद्रञ्च तेऽस्तु वन्दे त्वां प्रियं मे भवता कृतम्। तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान्। कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत्। सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः। पुरा देवयुगे तात! भृगोस्तुल्यवया इव। सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात्। महर्षेरभिशापेन कृमिभूतोऽपतं भुवि। अब्रवीद्धि स मां क्रोधात्तव पूर्व्वपितामहः। मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे। शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवम्। भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः"।

**अलपस्** न०न रपः पापम् न०त० रस्य लः। अपापे पुण्ये।

**अलवाल** न० लवमालाति ला—क न०त०। वृक्षसेकार्थं वृक्षमूले मृदादिकृते जलाधारे वेष्टने स्वार्थेऽण्। आलवालमप्यत्र।

**अलस** त्रि० न लसति व्याप्रियते लस—अच्। अवश्यकर्त्तव्येषु शरीरापाटवमभिनीय १कृताप्रयासे, "मृदुतरतनवोऽलसाः प्रकृत्याः" माघः अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः। २क्रियामन्दे च (पाकुँड़) ३पादरोगभेदे, ४वृक्षभेदे च पु०। ५हंसपदीलतायां स्त्री। पादरोगो यथा "क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ। दुष्टकर्दमसंस्पर्शादलसं च विभावय" पादौ सिक्त्वारनालेन लेपनं हरणे हितम्" इति च सुश्रुतः। गर्गादिगणपाठात् ४मुनिभेदे ततः अपत्ये यञ् आलस्यस्तदपत्ये लोहिता०यूनि ष्फ आलस्यायनः। अलसस्य भावः ष्यञ्। आलस्यम् न० तल् अलसता स्त्री त्व अलसत्वं न०। क्रियाकरणाय अप्रयत्ने।

**अलसक** पु० न लसति अनेन लस करणे—बा०वुन्। १रोगभेदे। यथाह सुश्रुतः "अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम्। विसूच्यलसकौ तस्माद्भवेताम्" इत्युपक्रम्य "कुक्षिरानह्यतेऽत्यर्थं ताम्यत्यत्यर्थं च कूजति। निरुद्धो मारुतोऽपि कुक्षावुपरि धावति। वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि। तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु"। तन्निरुक्तिरपि अन्यत्र दर्शिता "प्रयाति नोर्द्धं नाधस्तादाहारो न च पच्यते। आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः"। अलस+स्वार्थे कन्। २अलस शब्दार्थे त्रि०।

**अलात** पु० न०। ला—क्त न०त०। (कोयाला) इति ख्याते (आङ्गार) इति ख्याते च अर्द्धदग्धकाष्ठे। "निर्व्वाणालातलाघवम्" कुमा०।

**अलातृण** त्रि० अलमत्यर्थमातृणा आतर्द्दनाः अलम्+आ+तृद नि० दस्य न मलोपश्च। आतर्द्दनशीले। "अलातृणासो विदथेषु सुष्टुताः" ऋ०१,१६६,७, "अलातृणासः अलमत्यर्थं शत्रूणामातर्द्दनाः" भा०।

**अला(बु)बू** स्त्री न लम्बते न+लबि—उ णित् नलोपश्च वृद्धिः। (लाउ), तुम्ब्याम्। वा ऊङ्। अलाबूरप्यत्र। "अलाबूं वर्त्तुलाकारां वार्ताकुं कुन्दसन्निभाम् स्मृतिः"।

**अलाबुमय** त्रि० अलाबु+विकारे मयट्। शुष्कालाबुत्वङ्निर्म्मिते पात्रे "यतिपात्राणि मृद्वेणुदार्व्वलाबुमयानि च। सलिलैः शुद्धिरेतेषां गोबालैश्चावघर्षणम्" या० स्मृतिः।

**अलाबूकट** न० अलाबूनां रजः अलाबू+रजोऽर्थे कटच्। तुम्बीरजसि।

**अलाभ** पु० न लाभः अभावे न०त०। १लाभाभावे "नायं नलः खलु तवातिमहानलाभः" नैष०। "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ" गी०। "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्" स्मृतिः "अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्" मनुः। न०ब०। २लाभशून्ये त्रि०।

**अलाय्य** त्रि० ऋ—आय्य—रस्य लः। १गमनशीले २अभिमुखगन्तरि शत्रौ च। "अलाय्यस्य परशुर्ननाश" ऋ०८,६७,२०, "अलाय्यस्य अभिगमनशीलस्य शत्रोः" भा०।

**अलार** न० अरार्य्यते ऋ—यङ् लुक् अच् रस्य लः। कपाटे शब्दरत्ना०।

**अलास** पु० न लस्यति अनेन लस—करणे घञ् न०त०।

जिह्वागतरोगभेदे यथाह सुश्रुतः । “जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका च” इत्युक्त्वा “जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा । पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च । कफेन गुर्वी बहुलाचिता च मांसोद्गतैः शाल्मलिकण्टकाभैः । जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः । जिह्वां स तु स्तम्भयति प्रवृद्धे मूले तु जिह्वा भृशमेति पाकम्”॥ स तु असाध्यरोगः यथोक्तं तत्रैव । “असाध्या अपि वक्ष्यन्ते रोगा ये यत्र यादृशा” इत्युपक्रम्य “जिह्वागतेष्वलासस्तु तालव्येष्वर्बुदं तथा” इत्यद्यभिधाय “असाध्याः कीर्त्तिता ह्येते रोगा नव दशैव च”

**अलि** पु० अलति दंशे, कूजिते, शब्दिते, वा समर्थो भवति अल–इन् । १भ्रमरे, “अलमलेरिव गन्धरसावम्” माघः । “श्यामीभूताः कुसुमसमूहेऽलीनाम्” “मङ्क्षूदपाति परितः पटलैरलीनाम्” इति च माघः “अलिपङ्क्तिरनेकशस्तया” कुमा० । २वृश्चिके, ३काके, ४कोकिले, ५वृश्चिकराशौ च स च द्वादशधा विभक्तराशिचक्रस्याष्टमो भागः विशाखाद्यपादानुराधाज्येष्ठारूपः । ६सुरायां च ।

**अलिक** न० अल्यते भूष्यते अल–कर्म्मणि इकन् । ललाटे । “असंस्कृतालकिनीमलिकलेखाम्” काद० ।

**अलिकुलसङ्कुल** पु० अलिकुलेन सङ्कुलः व्याप्तः । १कुब्जवृक्षे राजनि० । २भ्रमरकुलव्याप्ते त्रि० “अलिकुलसङ्कुल कुसुम निराकुल नवदलमालतमाले” जयदेवः ।

**अलिगर्द** पु० अलिरिव वृश्चिक इव गर्द्धति गर्ध–अच् । (आलय) इतिख्याते सर्पभेदे श०र० ।

**अलिगु** पु० अलिरिव दुःसहा गौर्वाणी अस्य । गर्गादिगण पठिते ऋषिभेदे । ततः गोत्रे यञ् आलिगव्यः । तदपत्ये पुंस्त्री० स्त्रियां तु लोहिता० ष्फः । आलिगवायनी ।

**अलिङ्ग** त्रि० नास्ति लिङ्गं ज्ञापकहेतुश्चिह्नं वा यस्य । १अनुमापकहेतुशून्ये २चिह्नशून्ये च । वेदान्तिमतसिद्धे परमात्मनि पु० । न०त० । लिङ्गभिन्ने ३अननुमापके तच्च सांख्यमते “हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितम् लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्” सां०का० उक्तमव्यक्तम् । “अकार्य्यं नित्यं व्यापि अक्रियम् एकमनाश्रितमलिङ्गमनवयवं स्वतन्त्रमव्यक्तमिति” सां०त०कौ० । तद्धि न कस्यापि लिङ्गम् कार्य्येण कारणानुमानमिह विवक्षितं तेन सहत्यकारित्वेन परार्थतया तस्य पुरुषानुमाकत्वेऽपि न क्षतिरिति च तत्रानुसन्धेयम् “तदलिङ्गमेकद्रव्यत्वात् कर्म्मणः” वै०सू० । “कर्म्म न तावत् समवायिकारणतया आकाशमनुमापयति कर्म्मण एकद्रव्यत्वात् एकमात्रमूर्त्तसमवायिकारणत्वात्” वै० सू० उ० । ४दुष्टचिह्ने च ।

**अलिङ्गिन्** त्रि० न लिङ्गी वेशधारी । कपटवेशधारि- [भिन्ने ब्रह्मचारिप्रभृतौ ।

**अलिजिह्वा** स्त्री अलिरिव क्षुद्रा जिह्वा । जिह्वामूलस्थायां क्षुद्रजिह्वायाम् (आलजिभ) स्वार्थे कन् अत इत्त्वम् । तत्रैव ।

**अलिञ्जर** पु० अलनमलिः अल–इन् तं जरयति जॄ–अच् पृषो० मुम् । (जाला) इति ख्याते मृण्मये जलाधारे पात्रभेदे मणिके । “उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः । अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम्” भा०व०प० ।

**अलिदूर्व्वा** स्त्री अलिरिवाकारेण दूर्व्वा । मालादूर्व्वायाम् ।

**अलिन्** पु० अलं वृश्चिकपुच्छस्थकण्टकं विद्यतेऽस्य इनि, अल–इनि वा । १वृश्चिके, २भ्रमरे च । “मलिनिमाऽलिनि माधवयोषिताम्” माघः स्त्रियां ङीप् अलिनी “रमतालिनी शिलीन्ध्रे” माघः ।

**अलिन** त्रि० अल–बा० इनन् । पर्य्याप्ते तपोभिरतिप्रवृद्धे । आ पक्थासो भलानसो भनन्तालिनासो विषाणिनः” ऋ० ७।१८।७। “अलिनाः तपोभिरतिवृद्धाः” भा० ।

**अलिन्द** पु० अल्यते भूष्यते अल+कर्म्मणि किन्दच् । १द्वार प्रकोष्ठे २ बहिर्द्वारवर्त्तिनि चत्वराकारे प्रदेशे । “यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानिः” माघः ३बहिर्द्वारभागमात्रे ३देशभेदे ४तद्देशवासिनि ५तद्राजनि च ब०व० । “अलिन्दाः कालवाश्चैव कुण्ठकाः करटा स्तथा” भा० उ० प० जम्बुखण्डविभागे प्राच्यजनपदकथने । गौरादिगणपाठात् स्त्रियां ङीष् । अलिन्दी ।

**अलिपक** पु० कुत्सितवर्णेन लिप्यते लिप–बा० कर्म्मणि वुन् । १कोकिले २भृङ्गे ३कुक्कुरे च मेदि० ।

**अलिपत्रिका** स्त्री अलिर्वृश्चिक इव पत्रमस्याः वा कपि अत इत्त्वम् । वृश्चिकपत्राख्यलतायाम् । अलिपर्ण्यपत्र ।

**अलिप्रिय** न० ६त० । १कोकनदे रक्तोत्पले २भ्रमरप्रिये त्रि० ३पाटलावृक्षे राजनि० ।

**अलिमक** पु० अलिरिव मक्कते–मक्क अच् पृ०कलोपः । १भेके २कोकिले ३भृङ्गे ४मधूकवृक्षे ५पद्मकेशरे च मेदि० ।

**अलिमोदा** स्त्री अलीन् मोदयति मुद+णिच् अण् । गणिकारीवृक्षे

**अलिम्पक** पु० कुत्सितं लिप्यते वर्णेन लिप–बा कर्म्मणि श न०त० संज्ञायां कन् । १भृङ्गे २कोकिले ३मधूकवृक्षे ४भेके ५पद्मकेशरे च ।

**अलिल्** पु॰ ऋ–इलच् रस्य लः। वेदान्तप्रसिद्धे गगनचारिणि पक्षिभेदे—अलिलः पक्षिणः पुत्रो गगनाद्याति भूतलम्। खबोधाभावतः, स खबोधे यात्यम्बरं पुनः"। वेदा॰ वा॰। अलिन इति पाठस्तु सम्यक्।

**अलिवल्लभ** पु॰ ६त॰। १फलेरुहावृक्षे २पाटलौ।

**अलिवाहिनी** स्त्री अलिं वाहयति गन्धेन वह–णिच–णिनि ङीप्। कोङ्कणदेशप्रसिद्धे कङ्काङ्गवृक्षे।

**अलीक** न॰ अल–ईकन् १अप्रिये, २ललाटे, च। अलति गच्छत्यधोऽनेन। ३असत्ये। मिथ्याकथने हि नरकपातः। तत्र अप्रिये "गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया" मनुः "तद्यथा स महाराजो नालीकमधिगच्छति" रामा॰। विशेषेण अलीकम् व्यलीकम् अत्र नाप्रिये "व्यलीकनिश्वासमिवोत्ससर्ज" कुमा॰। अलीकमस्त्यस्य सुखा॰ इनि न ठन्। अलीको तद्वति त्रि॰ स्त्रियां ङीप्। अलीके भवः दिगा॰ यत् अलीक्यः। मिथ्याभूतभवे त्रि॰।

**अलीकमत्स्य** पु॰ "माषपिष्टिकयालिङ्ग्य नागवल्लीदलैर्म्हत्" तत्तु संस्वेदयेद्युक्त्या स्थाल्यामङ्गारकोपरि। ततोनिष्काशितं खण्डं तिलतैलेन भर्जयेत्। अलीकमत्स्यउक्तोऽयं प्रकारः पाकपण्डितैः। तं हन्ताकं भटित्रेण वास्तुकेन च भक्षयेत्" राजनि॰उक्ते पिष्टकभेदे।

**अलु** स्त्री अल–उन्। क्षुद्रकलस्याम्।

**अलुक्समास** पु॰नास्ति विभक्तेः लुक्–यत्र। विभक्तेर्लुक्शून्ये समासे यथा मनसिजः सरसिजमित्यादि।

**अलुब्ध** त्रि॰ न लुब्धः। निर्लोभे लोभशून्ये।

**अलूक्ष** त्रि॰ न रूक्षः वेदे रस्य लः। रूक्षभिन्ने चिक्कणे "अलूक्षाधर्म्मकायाः" तैत्ति॰उ॰।

**अलेपक** त्रि॰ नास्ति लेपः संबन्धोयस्य वा कप्। निस्सम्बन्धे परात्मनि पु॰। लिप–ण्वुल् न॰त॰। लेपकभिन्ने त्रि॰।

**अलोक** पु॰न लोक्यते लोक–कर्म्मणि घञ्। अस्मदादिभिरदृश्ये १पातालादौ २अदृश्यमाने त्रि॰ "लोकालोक इवाचलः" रघुः। लोकालोकशब्दे विवृतिः। ३लोकशून्ये निर्ज्जने त्रि॰ ३लोकशून्ये रहसि च न॰ "रक्ष सर्व्वानिमान् लोकान् नालोकं कर्त्तुमर्हसि" रा॰। लोकस्याभावः अभावे अव्ययी॰। ४लोकाभावे अव्य॰। नास्ति लोकोभोग्यलोको यस्य। ५अकृतपुण्ये त्रि॰ ६ऋत्विगादौ ७अलोका ऋत्विजः शत॰ ब्रा॰ तेषां दक्षिणाग्रहणेन पुण्यभागित्वाभावात् च भोग्यलोकशून्यत्वम्। ७इष्टकाभेदे स्त्री अलोका इष्टका उपदधाति"। लोकते कर्त्तरि अच्। ८दर्शकभिन्ने।

**अलोक्य** त्रि॰ लोकाय स्वर्गादिलोकप्राप्तये हितः तत्र साधु वा यत् न॰त॰। स्वर्गादिलोकासाधने। "यदलोक्यामग्निचित्याहुरथ किमर्थमेरिति "सहोवाच किं नु लोक्यं किमलोक्यम् लोक्या शतायुतेत्येवाहुस्तदुह पुरायुषः स्वःकामी न प्रेयादलोक्यं हि तत्" शत॰ब्रा॰ "ययास्यो द्विजते वाचा नालोक्यां तामुदीरयेत्" मनुः।

**अलोभ** पु॰लोभः धनादिस्पृहातिरेका अभावे न॰त॰। धनादिस्पृहातिरेकाभावे। लोभोहि सत्यास्तेयापरिग्रहविरोधी १सति हि लोभे सत्यादयो लुप्यन्ते। "लोभस्य पुरतः कोऽमी सत्यास्तेयापरिग्रहाः" प्रबो च॰। "लोभात् सद्यः प्रणश्यन्ति सत्यास्तेयापरिग्रहाः" पुरा॰ अतएव "लोभस्य यमादिप्रतिपक्षत्वं पातञ्जले उक्तम् "वितर्कबाधने प्रतिपक्षभावनम्" एतेषां यमनियमादीनां वितर्कैः हिंसादिसंकल्पैः "हनिष्यास्येनम्" "अनृतं वक्ष्यामि" "परस्वमादास्ये" इत्येवंरूपैः बाधने प्राप्ते सति यमपरः ब्राह्मणः प्रतिपक्षभावनं कुर्य्यादित्यर्थः।

**अलोभिन्** त्रि॰अलोभोऽस्त्यस्य इनि लोभोऽहुपदं व्याख्यातः। तच्छब्दे "अलोभी स्यात् प्रजावित्ते स्पृहयीयात् सम्मतं करम्" भा॰शा॰प॰।

**अलोल** त्रि॰ न लोलः। १अचञ्चले २वितृष्णे च।

**अलोलुप** त्रि॰ न॰त॰। लोभनीयद्रव्यसेन्द्रियसन्निधानेऽपि अविक्रिये लोभशून्ये पुरुषे।

**अलोह** पु॰ पाणिन्युक्ते नड़ादिगणीये ऋषिभेदे। गोत्रापत्ये नड़ा॰फक् आलोहायनः। तस्य गोत्रापत्ये पु॰स्त्री॰।

**अलोहित** न॰त॰। १लोहितभिन्ने रक्तताशून्ये। नास्ति लोहितं यस्मात्। २रक्तपद्मे रत्नमाला।

**अलौकिक** त्रि॰ लोके विदितः ठक् न॰त॰। लोकेषु अविदिते स्त्रियां ङीप्। "अधिहरि हरि ङि इत्यलौकिकं विग्रहवाक्यम्" सि॰कौ॰। इन्द्रियादिलौकिकसन्निकर्षाभावेऽपि २सामान्यलक्षणाद्यधीने प्रत्यक्षे न॰ इति नैयायिकाः तथाहि प्रत्यक्षं द्विविधं लौकिकमलौकिकञ्च। आद्यं चक्षुरादिजन्यमन्यं तदजन्यम्। तत्र सामान्यलक्षणादिसन्निकर्षजन्यमलौकिकम् ते च सन्निकर्षा अनुपदं वक्ष्यन्ते।

**अलौकिकसन्निकर्ष** पु॰ लोकेषु अविदितः सन्निकर्षः। "अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः। सामान्य लक्षणा ज्ञानलक्षणा योगजोमत" इति भाषा॰ उक्ते प्रत्यक्षसाधनसन्निकर्षभेदे सामान्यलक्षणादिलक्षणं

च तत्तच्छब्दे वक्ष्यते तथाहि यत्किञ्चिद्घटादौ चक्षुःसन्निकर्षे घटत्वसामान्यधर्मज्ञानेन सकलघटादिज्ञानं सामान्यलक्षणाधीनं घटादिज्ञाने न घटादिज्ञानं ज्ञानलक्षणाधीनम्, योगविशेषजनितं सकलघटज्ञानं च एतत्त्रयमलौकिकं प्रत्यक्षं तस्य च अलौकिकत्वात् तदुत्तरं तत्तद्विषये साक्षात्करोमीति नानुव्यवसायः किन्तु जानामीत्येवानुव्यवसाय इति भेदः ।

**अल्प** त्रि॰ अल–प । १क्षुद्रे, २ईषदर्थे, ३सूक्ष्मे, ४मरणार्हे । "अथ यदल्पं तन्मर्त्यम्" छा॰उ॰ । स्वार्थे कन् अल्पकमप्यत्र । ५यवासे पु॰ । अल्पत्वञ्च यस्य वस्तुनः यावती इयत्ता उचिता ततोन्यूनत्वम् तत्त्वं च परिमाणभेदः अपेक्षाबुद्धिविशेषविषयत्वमपकर्षाधायकधर्मविशेषो वा तेन द्रव्यगुणादिधर्मत्वं तस्य । तच्च जातिगुणक्रियाद्रव्येषु भवति अल्पा नदी अल्पः श्यामः अल्पं ज्ञानं अल्पः पाकः अल्पोऽवकाशः । "क्वचाल्पविषया मतिः" रघुः । "अल्पप्रयोजनकृतोरुतरप्रयासैः" माघः । "प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते" मनुः । अस्य गुणपरतापि "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्येति" पाणिन्युक्तेः अल्पान्मुक्तः अल्पतया मुक्त इत्यर्थः । वीप्सार्थे शस् । अल्पशः अव्य॰ । "पतितापत्रस्तैरल्पशः" पा॰ । अस्य संख्यावद्गुणवचनत्वात् अतिशायने इष्ठन् ईयसुन् च । अल्पिष्ठः अल्पीयान् स्त्रियां ङीप् । "संख्याया अल्पीयस्याः" वार्त्ति॰ अत्र प्रकृतेर्वा कन् । कनिष्ठः कनीयान् "कनीयान् दृषसुतस्त्यजेत्" स्मृतिः "भ्राता ज्येष्ठः कनिष्ठो वा" स्मृतिः । भावे इमनिच् अल्पिमा पु॰ ष्यञ् आल्प्यम् पु॰ स्त्री तल् अल्पता । स्त्रीत्व-अल्पत्वं न॰ क्षुद्रपरिमाणे ।

**अल्पकेशी** स्त्री अल्पः केश इव पत्रमस्याः । भूतकेशीवृक्षे ।

**अल्पगन्ध** न॰ अल्पो गन्धोयस्य । १रक्तकैरवे । २स्वल्पगन्धयुक्तमात्रे त्रि॰ । एकान्तसम्बन्धे इच् समा॰ । अल्पगन्धिः तत्रैव त्रि॰ ।

**अल्पतनु** त्रि॰ अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य १खर्व्वे, २दुर्बले, ३स्वल्पास्थियुक्ते च । पत्रके २वृक्षमात्रे च ।

**अल्पपत्र** पु॰ अल्पं पत्रं यस्य । १क्षुद्रपत्रयुक्ततुलसीभेदे स्वल्प-

**अल्पपद्म** न॰ अल्पमसम्पूर्णं पद्मम् । रक्तकमले रत्नमा॰ ।

**अल्पप्रमाण** पु॰ अल्पं प्रमाणमस्य वा कप् । (तरमुज) (खरमुज) वा इति १ख्याते वृक्षे । २अल्पप्रमाणयुक्ते त्रि॰ ।

**अल्पप्राण** पु॰ अल्पः प्राणः प्राणनक्रिया यस्मिन् । वर्णभेदे यस्योच्चारणे अल्पप्राणनायोव्यापारस्तस्मिन् । स च शिक्षायामुक्तः "अयुग्मवर्गयमगायणश्चाल्पासवः स्मृताः" इति तथा च वर्गेषु प्रथमतृतीयपञ्चमवर्णाः यमगाः यवरलाश्च अल्पासवः । कर्म्म॰ । २तादृशवर्णोच्चारणबाह्यप्रयत्ने । बाह्यप्रयत्नास्तु एकादशधा "विवारः संवारः श्वासोनादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति" सि॰कौ॰ । अल्पः प्राणः प्राणहेतुकं बलमस्य । ३अल्पबले त्रि॰ । [शाके ।

**अल्पमारिष** पु॰ अल्पः मारिषः शाकः कर्म्म॰ । (नटिया)

**अल्पमेधस्** त्रि॰ अल्पा मेधाऽस्य असिच् समा॰ । अल्पधारणायुक्तबुद्धौ धारणा च दृढसंस्कारः ।

**अल्पम्पच** त्रि॰ अल्पं पचति पच–खश् मुम् उप॰स॰ १मितम्पचे आत्मम्भरौ कृपणे । करणस्य कर्त्तृत्वविवक्षायाम् । २अल्पपाकसाधने पात्रादौ ।

**अल्पशमी** स्त्री कर्म्म॰ । क्षुद्रायां शम्यां शम्याकारे क्षुद्रवृक्षे ।

**अल्पसरस्** न॰ अल्पं सरः कर्म्म॰ । (डोवा) क्षुद्रजलाशये ।

**अल्पायुस्** पु॰ अल्पमायुः जीवनकालो यस्य । १छागे पशुषु तस्यैवाल्पायुष्कत्वात् तथात्वम् । २अल्पजीवनकाले त्रि॰ । "दुराचारोहि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च" मनुः वा कप् अल्पायुष्कोऽप्यत्र । कर्म्म॰ । यस्य यावदायुरुचितं ततोऽल्पमिते । जीवनकाले २आयुश्च जीवनकालः "शतायुर्वै पुरुष" इति श्रुतेः शतवर्षावच्छिन्नजीवनकालोनराणामायुः । एवमन्येषामायुःपरिमाणमायुःशब्दे वक्ष्यते । तत्र विशेषकालतायां ज्योतिषोक्तग्रहयोगस्य सूचकता यथा जातकालङ्कारे । "आयुर्मूलं जन्मिनां जीवनं स्यादाजीवानां निर्जराणां सुधेव । एवम्माहुः पूर्व्वमाचार्य्यवर्य्यास्तस्मादायुर्योगजाख्यं प्रवक्ष्ये । लग्नाधीशोऽतिवीर्य्यो यदि शुभविहगैर्वीक्षितः केन्द्रयातैर्दत्ते ह्यायुः सुदीर्घं गुणगणसहितं श्रीयुतं मानवानाम् । सौम्याः स्वोयालयस्था जनुषि च रजनीनायके स्वोयतुङ्गे वीर्य्याढ्ये लग्ननाथे वपुषि च शरदां षष्टिरायुर्नराणाम् ॥ सौम्याः केन्द्रालयस्थावपुषि सुरगुरौ लग्नतोवा सुधांशोरायुर्युक्तं न दृष्टं न च गगनगतैः सप्ततिर्वत्सराणाम् । याता मूलत्रिकोणे शुभगगनचराः स्वोयतुङ्गे सुरेज्ये लग्नाधीशोऽतिवीर्य्यो गगनवसु ८० समासंख्यमायुर्नराणाम् ॥ सौम्ये केन्द्रेऽतिवीर्य्ये यदि निधनपदं खेटहीनं समाः स्युस्त्रिंशत् सौम्येक्षितं चेद्गगनहिमकरैः संयुतोऽस्य स्वभे चेत् । स्वल्पांशे चामरेज्ये मुनिनयन २७ मितं स्वर्क्षगो लग्नगो वा चन्द्रोद्यूने शुभश्चेद्-

गगनरसमितं ६० कोणगाः सौम्यखेटाः ॥ कोटे लग्ने सुरेज्ये यदि भवति तदा खाष्ट ८०तुल्यं लग्नेशे धर्म्माङ्केशाङ्गनाथे निधनभवनगे क्रूरदृष्टेऽम्बुहस्ताः २४ । लग्नाधीशाष्टनाथौ लयभवनगतौ सप्तविंशत् २७ विलग्ने क्रूरेज्यौ चन्द्रदृष्टौ यदि निधनगतः कश्चनास्ते द्विपक्षाः २२॥ लग्नेन्दू क्रूरहीनौ वपुषि सुरगुरौ रन्ध्रभं खेटहीनं केन्द्रे सौम्ये खशैलाः ७० सितविबुधगुरू स्याच्छतं १०० केन्द्रगौ चेत् । वागीशे कर्कलग्ने शतमिह भृगुजे केन्द्रगेऽथार्कसूनौ धर्माङ्कस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ॥ धीकेन्द्रायुर्नवस्था यदि खलखचरा नो गुरोर्भे विलग्ने केन्द्रे काव्ये गुरौ वा शतमथ निधनं सौम्यदृष्टं शतं स्यात् । लग्नादिन्दोर्न खेटा यदि निधनगता वीर्य्यभाजौ सितेज्यौ पूर्णायुः स्वोच्चराशौ शुभगगनचराः षष्टिरङ्गोच्चगेज्ये ॥ कोदण्डान्त्यार्द्धमङ्गं यदि सकलखगाः स्वोच्चगा स्वे निजांशे गोस्थे पूर्णं च केन्द्रे सुरगुरुभृगुजौ लाभगेऽब्जे परायुः । शुक्रे नीचे तनुस्थे निधनपदगते सौम्यदृष्टे सुधांशौ जीवः केन्द्रे शतं स्यादथ तनुसहजपश्चिमद्रगः पुष्करेऽब्जे॥ वागीशोऽथोच्चयुक्तो नवमभवनगाः सर्वखेटाःशतायुः कर्कोऽङ्गे चन्द्रजीवौ सहजरिपुभगे स्यात् कविज्ञौ च केन्द्रे । केन्द्रे सूर्य्यारमन्दागुरुनवलवगा वाक्पतौ लग्नयाते व्यष्टस्थानेषु शेषाः शरगज ८५ कथितं स्यान्नराणां तदायुः ॥ क्रूराः सौम्यांशयाता उपचयगृहगाः २,६,१०,११, कातराः कण्टक १,४,७,१०स्थाः सौम्या व्योमार्कसङ्ख्य १२०यदि तपनकुजौ रन्ध्रगौ नो परायुः । केन्द्रे लग्नेशजीवौ नवसुतनिलये कण्टके१४,७१०,नो खलाख्याःसम्पूर्णं पापखेटायदि गुरुलवगा जीवभागे च सौम्याः॥युग्मर्क्षांशे गता वा व्ययधनगृहगास्वेच्छुभाः शीतभानुः सम्पूर्णो लग्नयायी शतमिह हि न्टषामिन्दिरामन्दिरं स्यात्। लग्नेशः सौम्ययुक्तो वपुषि च लयपो रन्ध्रगो नान्यदृष्टो विंशत् केन्द्रे लग्नेशे बलवियुजि तथा लग्नपे त्रिंशदायुः॥ इन्द्रावापोक्लिमस्थे २,६,८,१२, तदनु तनुपतौ निर्बले पापदृष्टे दन्तैस्तुल्यं ३२ ततोऽर्कोऽशुभखगविवरेलग्नतोऽब्धार्त्तिसंख्यम्।रिप्फे केन्द्रे सुरेज्ये गुरुरिपुसहजे स्यात् स पापोऽङ्गनाथो रामाब्दं कर्कलग्ने कुजतुहिनकरौ केन्द्ररन्ध्रे ग्रहो न॥ रामाब्दं ३स्याल्लयेशो वपुषि च निधनं सौम्यहीनं खवेदाः ४०लग्नेशोरन्ध्रयातो वपुषि निधनपः स्यान्नृणां वाणसंख्यम्५ । नक्रे तिग्मांशुमन्दौ सहजरिपुगतौ कण्टके१,४,७,१०रन्ध्रनाथः पारावाराब्धिसंख्यं ४४ तदनु शुभखगाः स्वांशगास्त्रिंशदायुः॥ अङ्गेशे सौम्यदृष्टे यदि शुभविहगावीर्य्यवन्तस्तदानीम् यातः सौम्ये गणेऽब्जो गुणमुनिगणितं ७३ रन्ध्रगैर्मध्यमायुः । स्याच्चन्द्रादङ्कि पादैरथ तपनसुते द्व्यङ्गलग्नं प्रयाते रिप्फेशोवायुरीज्यौ यदि बलरहितं कङ्कपत्रासंख्यम् ५५ ॥ कर्काङ्गे चण्डधामा खलविहगयुतः पुष्करे स्वो द्विजेन्द्रो वागीशोऽनस्तयायी विशिखपवनयुक्७५ स्याच्चतुर्थासदस्यः । सौम्यः पीयूषधामान्वितनुविलये संस्थितोऽसौ कवीज्यावेकलौ पुष्कराव ५० व्ययरिपुनिधने मूर्त्तिपश्चन्द्रयुक्तः ॥ मन्दांशे लग्ननाथो भुजगशरमितं ५८ स्यादथो सौम्यखेटा रन्ध्रे नो देहनाथो व्ययरिपुनिधने पापयुक् षष्टि ६०रायुः। राशीशोलग्ननाथो दिनमणिसहितो मृत्युगोवासवेज्यौ नो केन्द्रे षष्टिरायुर्व्वपुषि दिनकरः शत्रुभौमान्वितश्चेत् ॥ वागीशोहीनवीर्य्यो व्ययतनुजगते यामिनीशे खशैला ७० धर्मे सर्वैः परायुः खलखगलवगैः केन्द्रयातैरशीतिः ८० । क्रूरैः क्रूरत्रयातैः शुभभवनगतैः सौम्यखेटैः सवीर्य्य लग्नेशे स्यात् परायुः सुतभवनगतैः षष्टिरायुर्नराणाम्॥ सारङ्गस्यान्त्यभागे यदि वपुषि गते चाद्यभागे च केन्द्रे सौम्याः खेटाः शतं स्यादष्ट ८ सहज ३सुखे ४स्याच्चिरायुः समस्ताः । लग्नात् प्रालेयधाम्नो निधनसदनयोरिप्फकेन्द्रेऽष्टविंशत् २८ केन्द्रे सौम्यप्रहीने यदि क्षतिभवने कश्चिदास्ते खरामाः ३० ॥ चौषे प्रालेयभानौ यदि खलखचरो रन्ध्रगोरन्ध्रनेता केन्द्रस्थो लग्ननाथो निजबलरहितः खाश्वि २० तुल्यं तदायुः । सौम्यैरापोक्लिमस्थै दिनमणिजविधू वैरिरन्ध्रालयस्थौ तुल्यं कामाङ्कुशैः२२स्यादथ धनलयगौ रिप्फगौ पापखेटौ ॥ हीनौ स्वभानुना वा यदि हिममहसाकाशबाहु २० प्रमाणं केन्द्रस्थौ सूर्य्यमन्दौ यदि वपुषि कुजः पुष्पबाणाङ्कुशः २५ स्यात् । शुक्रेज्यावङ्गयातौ तनयभवनगौ भानुपापावनायुर्जन्मेशः सार्कलग्ने खलखगसहितो वेक्षितः स्यादनायुः ॥ यत् सम्प्रोक्तं योगजातम्पुराणैर्होरापारावारपारप्रयातैः । तस्मादायुः सारमंशं गृहीत्वा पुंसामुक्तम्पुण्यभाजाम्मयेदम् ॥बलाबलविवेकेन पुनरागमयायिनाम् । सुमनोभिरिदं देयमायुर्धर्म्मादिशालिनाम्” ॥

“पापत्रिकोणकेन्द्रे सौम्याः षष्ठाष्टमव्ययगताः । सूर्य्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः” । सूर्य्यरिष्टम् । “षष्ठेऽष्टमे च चन्द्रः सद्योमरणाय पापसंदृष्टः । अष्टाभिश्च शुभैर्दृष्टोवर्षैर्मिश्रैस्तदर्द्धेन” । चन्द्ररिष्टम् । “सुत

मदनगान्त्यलग्नरन्ध्रेष्वशुभयुतोमरणाय शीतरश्मिः । भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो-वा" । पापयुतचन्द्ररिष्टम् । "द्यूनचतुरस्रसंस्थे पाप-द्वयमध्यगे शशिनि जातः । विलयं प्रयाति नियतं देवैरपि रक्षितोबालः" । पापमध्यगचन्द्ररिष्टम् । "क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्युसंस्थैर्वा । भवति विपत्तिरवश्यं जननाधिपतेर्मतञ्चैतत्" । क्षीणचन्द्ररिष्टम् । "नागदगो१ सिद्ध२४ जातो२२ षु५ क्ष्मा१ श्वि४ त्र्याश्वि २२ धृति१८ र्नखाः २० । क्षमाग्नि२१ दिक्१० चेत्यजाद्यंशे तत्तुल्याब्दैर्विधौ व्यसुः" । मेषादीनां त्रिंशांश-विशेषस्थचन्द्ररिष्टम् । "भौमे विलग्ने शुभदैरदृष्टः षष्ठे-ऽष्टमे वार्कसुतेन युक्तः । सद्यः शिशुं हन्ति वदेत्मनुनीन्द्रः क्षारे यमारौ न शुभेक्षितौ च" । त्रिविधभौमरिष्टम् । "कर्कटधामनि सौम्यः षष्ठाष्टमराशिगोविलग्नर्क्षात् । चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्टयेन मारयति" । बुधरिष्टम् । "वृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिः । वर्षैस्त्रिभिर्भार्गवदृष्टिहीनोलोकान्तरं प्रापयति प्रसूतम्" वृहस्पतिरिष्टम् । "रविशशिभवने शुक्रोद्वादशरिपुरन्ध्र-गोऽशुभैः सर्व्वैः । दृष्टः करोति मरणं षड्भिर्वर्षैः किमिह विचित्रम्" । शुक्ररिष्टम् । "मारयति षोडशाहात् शनैश्चरः पापवीक्षितोलग्ने । संयुक्तोमासेन वर्षाच्चङ्कस्तु मारयति" । त्रिविधशनिरिष्टम् । "राहुश्चतुष्टयस्थोमर-णाय वीक्षितोभवति पापैः । वर्षैर्वदन्ति दशभिः षोड़शभिः केचिदाचार्य्याः । घटसिंहवृश्चिकोदयकृतस्थितिर्जीवितं हरति राहुः । पापैर्निरीक्ष्यमाणः सप्तमितैर्निश्चितं वर्षैः" । राहुरिष्टम् । "केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तुः । रौद्रे सर्पमुहूर्त्ते प्राणैः संत्यज्यते चाशु" । केतुरिष्टम् । "लग्ने ये द्रेक्काणा निगड़ाहिविहङ्गमपाश-धरसंज्ञाः । मरणाय सप्तवर्षैः क्रूरयुताः खपतिदृष्टाः" । द्रेक्काणरिष्टम् । "मीनकर्कटयोरन्त्यौ वृश्चिकस्याद्यमध्यमौ । सर्पाश्चत्वार एवैते द्रेक्काणा निगड़ाश्च ते । तुलामध्यान्त-सिंहाद्य कुम्भाद्याः पक्षिणः स्मृताः । वृषाद्यमकराद्यन्त्या द्रेक्काणाः पाशधारिणः" । लग्नाधिपजन्मपती षष्ठाष्टमरिपु-फगौ प्रसवकाले । अस्तमितौ मरणकरौ राशिप्रमितैर्वदेद्वर्षैः । जन्मपतिर्जन्मराश्यधिपः । लग्नाधिपजन्माधिपरिष्टम् "सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपगतैर्दृष्टाः । मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः" । सौम्यग्रहरिष्टम् । "एकः पापोऽष्टमगः शत्रुगृहो शत्रुवीक्षितोवर्षात् । मार-यति नरं प्रसूतं सुधारसोयेन पीतोऽपि" । पापग्रहरिष्टम् । "होरायाः सप्तमे सौरिर्हिबुकस्थश्च भास्करः । अस्मिन् योगे तु योजातः सोऽल्पायुर्भवति प्रिये । दशमषष्ठगते जीवे समसप्तगते शनौ । द्वादशस्थोयदा भानुर्वर्षमेकं न जीवति" । "प्रतिपद्युत्तराषाढ़ा नवम्यामेव कृत्तिका । पूर्व्वभाद्रपदाष्ट-म्यामेकादश्याञ्च रोहिणी । द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा । एभिर्जातो न जीवेत यदि शक्र-समोभवेत्" । एवमन्येऽपि अल्पायुर्योगा आकरे दृश्याः । मनुना तु "अनभ्यासेन वेदानामाचारस्य तु वर्ज्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इति अन्न-दोषादेरपि अल्पायुर्हेतुतोक्ता । अन्नदोषश्च अभक्ष्यभक्षणादि तच्चाभक्ष्यशब्दे उक्तम् आचारश्च आचारशब्दे वक्ष्यते ।

**अल्पाल्प** त्रि॰ अल्पप्रकारः अतिशयेन वा अल्पः अल्प+प्रकारादौ द्विरुक्तिः । अत्यन्ताल्पे पादादौ "फलं चाल्पाल्पकं तस्य घर्म्मसार्द्धत्रयो भवेत्" ति॰त॰ स्मृ॰ ।

**अल्पिका** स्त्री अल्पा प्रमाणेन कन् । १सुक्ष्मपर्ण्याम् । अल्पार्थे कन् २अल्पमात्रायाम् ।

**अल्पित** त्रि॰ अल्पं क्रियते स्म अल्प+कृतर्थे णिच्—कर्म्म-णि क्त । अल्पीकृते "कृपा न चक्रेऽल्पितकल्पपादपः" नै॰ ।

**अल्पिष्ठ** त्रि॰ अतिशयेन अल्पः इष्ठन् । अतिशयिताल्पे ।

**अल्पीयस्** त्रि॰ अतिशयेन अल्पः ईयसुन् स्त्रियां ङीप् । अतिशयिताल्पे ।

**अल्ला** स्त्री अल्यते इत्यल् क्विप् अले भूषायै लाति गृह्णाति ला—क३त॰ । १मातरि । अलतीति अल् पर्य्याप्तः सन् लाति सर्व्वानस्ति गृह्णाति जानाति वा ला—क । २सर्व्वज्ञायां सर्व्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्व्ववेदे अल्लाल्लेत्यादिश्रुतौ प्रसिद्धा ।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां, वृद्धौ, ग्रहणे, वधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक॰ अक॰ च भ्वादि॰ सेट् पर॰ । अवति आवीत् । आव । अव्यात् । अविता । अवितः । अवन् । अविषः । "अ-वतु वोगिरिसुता शशिभृतः प्रियतमा" उद्भ॰ । "अरि-समुदयादवतः" नलोदयः । "प्रविष्टोमिनमाविषुः" । य॰ २३,२८, तत्र तर्पणे "न मामवति सद्वीपा रत्नसूरपि मेदिनी" रघुः । रक्षणे "यदाविथ सखीयतो यदाविथ" ऋ॰१,१३१,५, "आविथ रक्षसि अन्यत्र तपवसि" भा॰ गतौ च आनो "बर्हिः सदताविता" ७,५९,६, "अविता

आगच्छत्” भा०। भक्षणे च “प्रोथदश्वो न यवसेऽविष्यन् यदा”। ७,३,२, “अविष्यन् भक्षयिष्यन्” भा० “तृष्णविष्यन्नतसेषु तिष्ठति” १,५८,२, “अविष्यन् भक्षयिष्यन्” भा० एवमन्यार्थेषूदाहार्य्यम् ।

**अव** अव्य० अव–अच्। १निश्चये, २व्याप्तौ, ३अनादरे, ४असाकल्ये ५आलम्बने, ६शुद्धौ, ७परिभवे, ८नियोगे, ९निम्नतायां च । अयं चादिः प्रादिश्च “अव ज्ञानावज्ञालम्बशुद्धीषदर्थव्याप्ति पराभवातियोगेषु” गण०र० ज्ञाने अवगतोऽर्थः। अवज्ञाया-मवजानाति । आलम्बने आलम्ब्य यष्टिं गच्छति शुद्धौ अवदातम् । ईषदर्थे अवहन्ति अल्पं हन्ति, व्याप्तौ अवकीर्णः । परिभवे अवघ्नन्ति । अतियोगे अवघात इत्युदाहृतञ्च । अनादरे “अवजानासि मां यस्मात्” रघुः अवमानः । व्याप्तौ अवकाशः असत्यां व्याप्तौ न सर्व्वतः प्रवेशः इति तस्य व्याप्त्यर्थकता । अवगाहते । निश्चये अवस्यति अवसायः अवधारयति। निम्नतायाम् अवनमति अवतरति अवक्षिपति अवाचीनः इत्यादि । असाकल्यमीषदर्थः । व्रीहीनवहन्ति अवघातश्च वितुषीकरणार्थ एकदेशमात्रे घातः न तु सर्व्वावयवे इति असाकल्यद्योतकता पराभवे शत्रून् अवहन्ति पराभवतीत्यर्थः नियोगे अवक्लृप्तिः “एवे चानियोगे” वा० अनियोगोऽनवक्लृप्तिः सि०कौ अवकल्पते । अस्य वातो लोपः वगाहः । “अवादयः क्रुष्टाद्यर्थे तृतीयया” वा० उक्तेः क्रोशार्थेऽपि अवक्रुष्टं कोकिलया अवकोकिलः ।

**अवकट** अव+स्वार्थे कटच् । १अवशब्दार्थे अतिशयिताधरे ततः स्वार्थे कन् तत्रैव । [पु० ।

**अवकम्पित** अव+कपि कर्त्तरि–क्त । १विचलिते २वृक्षभेदे

**अवकर** पु० अव+कॄ–अप् । १उपहतौ “स्तोमानवकरगत्महि” ता०ब्रा० “अवकर उपहतिः” भा० । २सम्मार्ज्जन्यादिक्षिप्ते धूल्यादौ । “अवकरशोधनेन” ५,१२४,मनुव्या०कुल्लू० ।

**अवकर्षण** न० अव+कृष–ल्युट् । बलपूर्व्वकाकर्षणे स्थानान्तरनयनार्थं बलेनाकर्षणे ।

**अवकलित** त्रि० अव+कल–क्त । १दृष्टे २ज्ञाते ३गृहीते च

**अवका** स्त्री अव–प्रहणे कर्म्मणि कुन् चिपका० न इत्त्वम् । शैवाले “तटत्त करोत्यवकामुपदधाति अवकाभिः प्रच्छादयति आपोवा वा अवकाः” शत०ब्रा० “अरत्निमात्रेऽषाढां दक्षिणेनावकास्तूपरिष्टाच्च” कात्या० १७,४,२८ “अवकासु शैवालेषु कर्क० । “मण्डूकावकावेतसशाखावेणौ बद्ध्वावकर्षति” का० १,२,१०, ।

**अवकाश** पु० अव+काश–घञ् । अवस्थितियोग्यतासम्पादके काले, देशे च । तत्र कालिकोऽवकाशः क्रियान्तरस्थितियोग्यतासम्पादकः स चावसर इत्यप्युच्यते, “कृतावकाशे रुचि संक्लृप्तम्” इति भट्टिः । द्रव्यान्तरस्थितिप्रवेशयोग्यतासम्पादको दैशिकः स चावकाश इत्येव “अवकाशं किलोदन्वानिति” रघुः ।

**अवकीर्ण** त्रि० अव+कॄ–क्त । १व्याप्ते “चतुष्कपुष्पप्रकारावकीर्णः कुमा०। २चूर्णिते ३ध्वस्ते च” भावे क्त। ४ “अवकीर्णित्वे, ब्रह्मचर्य्यव्रतभङ्गे । अवकीर्णनिमित्तं तु ब्रह्महत्याव्रताचरेत्” । अङ्गि० ।

**अवकीर्णिन्** पु० अवकीर्णमनेन इष्टा० इनि । ध्वस्तव्रते ब्रह्मचारिणोयद्व्रतमुक्तं स्त्रीसङ्गमादिवर्जनं तस्य भ्रंशेऽवकीर्णता । “अवकीर्णी तु कालेन गर्द्दभेन चतुष्पथे । पाकयज्ञविधानेन नैर्ऋतं निशि याजयेत्” अङ्गि० “कुशीलवोऽवकीर्णी च वृषलीपतिरेव च” मनुः अवकीर्णिलक्षणञ्च–“कामतोरेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः “अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् । गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति” या० स्मृ० स्त्रियं विनाऽपि रेतसः स्रावे व्रतलोपः “ब्रह्मचारी चेत् स्त्रियमुपेयात् अरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्वपेत् तत्र जुहुयात् कामाय स्वाहा कामकामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहेति एतदेव रेतसः प्रयत्नोत्सर्गे” इति वसिष्ठोक्तेः तेन कामतोरेतस उत्सर्गेऽपि अवकीर्णित्वम् । अकामतस्तु नावकीर्णित्वं किन्तु प्रायश्चित्तात्पत्वं यथोक्तं मनुना “स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्” ।

**अवकुञ्चन** न० अव+कुञ्च–ल्युट्। १आकुञ्चने आकुञ्चनञ्च सत् स्वावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगोत्पादकं वस्त्राद्यवयवकौटिल्योत्पादकं च कर्म यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्म्मेति प्रत्ययः, तादृशं कर्म्म” वै०स्०उ० । करणे ल्युट् “अतऊर्द्ध्वं सर्वेवेदनाभवन्ति उपक्रम्य” “तोदनभेदनस्तम्भनस्पर्शावकुञ्चनाङ्कुशिका भवन्तीति” सुश्रुतोक्ते २रोगभेदे च ।

**अवकीर्णिव्रतम्** अवकीर्णिनो व्रतम् प्रायश्चित्तम् । “अथातोऽवकीर्णिप्रायश्चित्तं व्याख्यास्यामः ब्रह्मचारी यद्यवकीर्य्येत स चतुर्थकालमश्नं भैक्ष्यं चरेदेवं पूतो भवतीति”

यातातपोक्तौ "एतस्मिन्नेव संप्राप्ते वसित्वा गर्द्दभाजिनम्। तन्नवानचरेत् भैक्ष्यं स्वकर्म्म परिकीर्त्तयन्। तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकम्। उपस्पृशंस्त्रिसवनमेनस स विशुध्यति" मनूक्तौ अवकीर्णिव्रतदुपक्रम्य "तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात् ओङ्कारपूर्व्विकाभिः। संवत्सरं वा नक्तं भैक्ष्यं चरेत् चतुर्थकाले मितभुग्गायत्रीं वत्सरानुगां जपेदिति" शङ्खलिखितोक्तौ च "अवकीर्णनिमित्तन्तु ब्रह्महत्याव्रतञ्चरेत्। खरचर्म्मवासा षण्मासांस्तथानुमुच्येत किल्विषात्" अङ्गिरसोक्तौ च व्रतभेदे। एतस्य विषयभेदः प्रायश्चित्तविवेकतोऽवसेयः।

**अवकुटार** त्रि॰ अव+स्वार्थे अतिशये वा कुटारच् अत्यन्तनिम्नादौ १अवशब्दार्थे २वैरूप्ये न॰।

**अवकृष्ट** त्रि॰ अव+कृष–क्त। १दूरीकृते २अपसारिते, ३बहिष्कारिते च। अवकृष्टं गृहावकरादेरवकर्षणमस्त्यस्य अर्श॰ अच्। ४गृहावकरमार्जके दासभेदे पु॰। "पणोदेयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्। षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः" मनुः। "अवकृष्टस्य गृहादिसंमार्जकोदकादिवाहादेः कर्म्मकरस्य कुल्लू॰"।

**अवकृष्य** त्रि॰ अव+कृष कर्म्मणि क्यप्। १आकर्षणीये २दूरीकार्ये अव+कृष ल्यप्। ३आकृष्येत्यर्थे अव्य॰।

**अवक्लृप्ति** स्त्री अव+कृप–क्त रोलः। सम्भावनायाम् "अनवक्लृप्त्या मर्षयोः" पा॰ "अनवक्लृप्तिरसम्भावना" सि॰ कौ॰ "कोव भोक्ष्यसे अनवक्लृप्तावेव" सि॰कौ॰।

**अवकेशिन्** त्रि॰ अवच्युतं कं सुखं यस्मात् प्रा॰ब॰ अवकं फलशून्यतामीशितुं शीलमस्य अवक+ईश–णिनि। १अफले वृक्षे। अवसन्नाः केशा विद्यन्ते अस्य इनि। २अल्पकेशयुक्ते। [लया कुष्टे।

**अवकोकिल** त्रि॰ अवक्रुष्टः कोकिलया प्रा॰ स॰। कोकि-

**अवक्तव्य** त्रि॰ न वक्तव्यः। १वक्तुमनर्हे अश्लीलादौ वाक्ये २निषिद्धवचने ३मिथ्याभूते च।

**अवक्त्र** त्रि॰ नास्ति वक्त्रं यत्र। सुश्रुतोक्ते शोणितादिनिस्सारणमुखशून्ये व्रणादौ "अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि। नेत्रवर्त्मगुदास्यासनाड्योऽवक्त्राः समीरिताः"।

**अवक्र** त्रि॰ विरोधे न॰त॰। वक्रताविरोधिनि सारल्ययुक्ते।

**अवक्रक्षिन्** त्रि॰ अव+क्रक्ष णिनि छ॰। अवकर्षणशीले "अवक्रक्षिणं वृषभं यथा जुरम्" ऋ॰८,१,२, अवक्रक्षिणमवकर्षणशीलम्" भा॰।

**अवक्रन्द** त्रि॰ अव+क्रन्द कर्त्तरि अच्। १नीचैः क्रन्दनशीले "क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा" य॰२२७। भावे घञ्। नीचैः २क्रन्दने पु॰। भावे ल्युट् अवक्रन्दनमप्यत्र न॰।

**अवक्रम** पु॰ अव+क्रम–भावे घञ्। अवक्रमणे निम्नगतौ।

**अवक्रय** पु॰ अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री–अच्। ग्राह्यस्य प्रतिरूपत्वेन देये १मूल्ये २भाटके च भाटकञ्च गृहवस्त्रादिवस्तुनः एतावत् उपभोगे धनं ग्राह्यमिति समयेन परायत्तीकरणम् करणेऽच्। ३तत्साधने द्रव्ये शुल्कादिस्थाने वणिग्भिर्न्देयाय देये (माहुल) ४करे च।

**अवक्रान्ति** स्त्री अव+क्रम–क्तिन्। निम्नक्रमणे अधोगमने।

**अवक्रुष्ट** त्रि॰ अव+क्रुश–कर्म्मणि क्त। कृताक्रोशे यदुद्दिश्य क्रोशः कृतस्तस्मिन्। "अवक्रुष्टः कोकिलया" सि॰कौ॰।

**अवक्लिन्न** त्रि॰ अव+क्लिद–क्त। पाकादधस्तात् १क्लिन्ने (पचा) १फलादौ जलादिना २अत्यन्तार्द्रे च। पूर्व्वं पक्वं ततोऽवक्लिन्नं राज॰ पूर्व्वनि॰। अवक्लिन्नपक्वम्।

**अवक्लेद** पु॰ अव+क्लिद–भावे घञ्। पाकोत्तरं क्लेदे (पचाकुओया) क्लेदश्च जलविशेषसंयोगेन वस्तुनो नाशजनकः अवयवसंयोगशैथिल्यसंपादको व्यापारः।

**अवक्षय** पु॰ अव+क्षि–भावे अच्। हृद्वृत्तरं नाशोन्मुखावस्थायां भावविकारभेदे।

**अवक्षयण** न॰ अव+क्षि–णिच्–भावे ल्युट्। अवक्षयसाधने व्यापारभेदे। "ब्राह्मणा उल्मुखावक्षयणमकृत" शत॰ब्रा॰। [यस्यावक्षेपः कृतस्तस्मिन्।

**अवक्षिप्त** त्रि॰ अव+क्षिप–कर्म्मणि क्त। कृतावक्षेपे वस्तुनि

**अवक्षीण** त्रि॰ अव+क्षि–क्त। १अवक्षयप्राप्ते विनाशोन्मुखे पदार्थे। भावे क्त। २अवक्षये न॰।

**अवक्षुत** त्रि॰ अव+क्षु–क्त। उपरि कृतक्षुते। यस्योपरि क्षुतं कृतं तस्मिन्। "द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम्" मनुः।

**अवक्षेपण** अव+क्षिप–भावे ल्युट्। अधःसंयोगानुकूले क्रियाभेदे। "मुसलमवचिक्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगरूपादसमवायिकारणात् हस्ते क्रिया जायते ततोऽवक्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् हस्तसंयुक्तमुसलेऽप्यवक्षपणं कर्म्म युगपद्वा जायते" वै॰सू॰उ॰ उक्तं ज्ञेयम्। "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि" वैसू॰ "उत्क्षेपणं तथावक्षेपणमाकुञ्चनं तथा। प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" भाषा॰। भावे घञ्। अवक्षेपोऽप्यत्रार्थे। करणे ल्युट् ङीप्। २बलायामोषधौ स्त्री।

**अवखात** न॰ निम्नः खातः। गभीरगर्त्ते।

**अवखाद** पु० अवज्ञातः निन्दितः खादः खाद्यम् प्रा०स०। निन्दितखाद्ये "नान्यावखादो अस्ति वः" ऋ०१,४६,४ "अवखादः अवज्ञातः खादः जुगुप्सितहविर्विशेषः" भा०

**अवगणन** न० अव+गण–भावे ल्युट्। १अवज्ञायां २निन्दने ३तिरस्कारे ४परिभवे च। [च ३तिरस्कृते ४पराभूते च।

**अवगणित** त्रि० अव+गण–कर्म्मणि क्त। १अवज्ञाते २निन्दिते

**अवगण्ड** पु० अव+गम+ड डकारस्य नेत्त्वम्। गण्डस्थव्रणभेदे गण्डोपरिजाते रोगभेदे (गरगण्ड)।

**अवगत** त्रि० अव+गम–क्त। १निम्नगते,२ज्ञाते च। "तस्मान्ना-वगतब्रह्मात्मभावस्य यथापूर्व्वं संसारित्वं यस्य तु यथापूर्व्वं संसारित्वं नासावगतब्रह्मात्मभाव" इति शा० भा०।

**अवगति** स्त्री अव+गम–भावे क्तिन्। १ज्ञाने २निश्चयात्मकज्ञाने च "अवगतिपर्य्यन्तं ज्ञानं सन्प्रत्ययवाच्याया इच्छायाः कर्म्म-फलविषत्वादिच्छायाः ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म" "ब्रह्मावगतिर्हि पुरुषार्थः" ब्रह्मावगतिस्त्व-प्रतिज्ञातेति" च शा०भा०। [उज्ज्व०।

**अवगथ** पु० अव+गा–कर्त्तरि थ नि०ह्रस्वः। प्रातःस्नाते

**अवगदित** त्रि० अव+गद–कर्मणि क्त। १अपवादयुक्ते२निन्दिते

**अवगम** पु० अव+गम–भावे घञ्। १ज्ञाने२निश्चयात्मकज्ञाने "प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम्" गीता।

**अवगाढ़** त्रि० अव+गाह–क्त। १निविड़े, २अन्तःप्रविष्टे, ३निमग्ने। यस्मिन् अवगाढ़ः कृतस्तस्मिन् ४जलादौ ५विषयभूते पदार्थे च। यथा घटज्ञानेन घटत्वविशिष्टघटा-त्तनुसंसर्गश्च अवगाढ़ः। अस्य वा अतोलोपे वगाढ़ोऽप्युक्तार्थेषु

**अवगाह** पु० अव+गाह–घञ्। १स्नाने, २अन्तःप्रवेशे ३ज्ञानेन वियोगीकरणे च॥ आधारे घञ्। ४स्नान-स्थाने। वा अल्लोपे वगाहोऽप्यत्रार्थे। ल्युटि। अवगाहन-मप्यत्र न०।

**अवगाह्य** त्रि० अव+गाह–कर्म्मणि ण्यत्। १अवगाहनादि-योग्ये जलादौ २अन्तःप्रवेश्ये ३विमर्शकार्य्ये च। अव+गाह–ल्यप्। ४अवगाहनं कृत्वेत्यर्थे अव्य०।

**अवगीत** त्रि० अव+गै–क्त। १निर्व्वादे जनापवादे २दुष्टे ३गर्हिते ३मुहुर्दृष्टे मेदि०भावे क्त। ४निन्दायाम् ४लोकापवादे च न०।

**अवगुण** पु० अव+गुण–क। दोषे। "परावगुणम् अन्य-दोषमिति किरा० १३।४८। श्लोकव्या० मल्लि०।

**अवगुण्ठन** न० अव+गुण्ठ–ल्युट्। योषितां १शिरःप्रावरण-क्रियायाम्। करणे ल्युट्। २मुखाद्याच्छादने वस्त्रे। "अव-गुण्ठनसंवीता कुलजाभिसरेद्यदि" सा०द० "चण्डाल-स्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः" सा०द०। कृतावगुण्ठपटलक्षणलक्ष्यमाणः "माघः। ३आच्छा-दनमात्रे च "डमित्यवगुण्ठनं कृत्येति" तन्त्रम्।

**अवगुण्ठनमुद्रा** स्त्री अवगुण्ठनाय मुद्रा। "सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी। अवगुण्ठनमुद्रेयमभितो भ्रमिता मता" तन्त्रसारोक्ते मुद्राभेदे।

**अवगुण्ठिका** स्त्री अवगुण्ठयति आवृणोति अव+गुण्ठ-ण्वुल् स्त्रीत्वात् टापि अत इत्त्वम्। स्त्रीणां १मुखा-वरणशाट्याम्, २जवनिकायाञ्च। अव–गुण्ठ–धात्वर्थे ण्वुल्। ३अवगुण्ठनक्रियायाम्।

**अवगुण्ठित** त्रि० अव+गुण्ठ–क्त। १कृतावगुण्ठने आवृते "रजनीतिमिरावगुण्ठिते" कुमा०। २चूर्णिते च।

**अवगुम्फित** त्रि० अव+गुन्फ–कर्म्मणि क्त। ग्रथिते।

**अवगूर्य्य** अव्य० अव+गुरी–उद्यमे ल्यप्। वधार्थं दण्डमुद्य-म्येत्यर्थे "अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने" मनुः।

**अवगृह्य** न० अव+ग्रह–क्यप्। व्याकरणसिद्धे प्रगृह्यसंज्ञके पदे। पाणिनीये प्रगृह्यमिति संज्ञा प्रातिशाख्ये तु अवगृह्यमिति संज्ञा। यस्यावग्रहः विशेषेण ग्रहः विच्छेद-वशेन भवति न सन्धिकार्य्यं तत् पदं प्रगृह्यमवगृह्य-मिति च भण्यते। यथा हरी एतौ इत्यादि।

**अवगोरण** न० अव+गुर–उद्यमे ल्युट्। वधायास्त्राद्युद्यमे। दण्डनिपातनप्रायश्चित्तेन नान्तरीकतया प्रसङ्गेन अवगोर-णनिमित्तप्रायश्चित्तस्य सिद्धिः" प्रा० वि०।

**अवग्र(ग्रा)ह** पु० अव+ग्रह–अप् १घञ् वा। १वृष्टिजलप्रतिबन्धे "वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्" "रावणावग्रह-क्लान्तमिति वागमृतेन सः"। नभोनभस्ययोर्वृष्टिमवग्रह-इवान्तरे" इति च रघुः२अनावृष्टौ च "तृषेव सीतां तदवग्रह-क्षताम्" कुमा०। ३निग्रहे "स्वयं विधाता सुरदैत्यरक्षसा-मनुग्रहावग्रहयोर्यदृच्छया" माघः। व्याकरणोक्ते सन्धिरा-हित्यरूपे ४विच्छेदे "इन्द्रोऽसि विशौजाः य०१०, २८ मन्त्रे विड़ौजा इति प्राप्ते विशौजास्त्वान्दन्द्रसमतएव पद-कारो नावग्रहं चकार" वेददी०। ५प्रतिबन्धमात्रे "अव-ग्रहभव्येष्वनवग्रहग्रहा यथा दिशा धावति वेधसः स्पृहा" नै०। ६गजसमूहे हारा० ७गजललाटे मेदि०। ८स्वभावे त्रिका० अवग्राहस्तु ६शापे। [मेदि० ३ज्ञाने च।

**अवग्रहण** न० अव+ग्रह–भावे ल्युट्। १प्रतिरोधे २अनादरे

**अवघट्ट** पु० अव+घट्ट–आधारे घञ्। भूमिरन्ध्रे १छिद्रे त्रिका०।

करणे घञ् । २घरट्टे (याँता) पेषणयन्त्रभेदे । भावे घञ् । ३चालने घट्टनाक्रियायाम् भावे ल्युट् । अवघट्टनं तत्रैवार्थे न० । "प्रदेशस्य बहुशोऽवघट्टनाद्योऽपि व्यथा" सुश्रुतः । युच् । तत्रैवार्थे स्त्री ।

**अवघट्टित** त्रि० अव+घट्ट—कर्म्मणि क्त । चालिते ।

**अवघर्षण** न० अव+घृष—ल्युट् । अधःस्थापयित्वा १घर्षणे सर्वतो २ घर्षणे "दुर्न्यासात् अथवत्माविघर्षणम्" सुश्रुतः ३मार्जने च मलावघर्षणम् पात्रावघर्षणम्" सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणात्" या० स्मृ० ।

**अवघात** पु० अव+हन—घञ् । १अवहनने तण्डुलादेर्वितुषीकरणव्यापारे । अवघातश्च व्रीहिसंस्कारार्थः व्यापारभेदः तदकरणे यज्ञासिद्धिः "व्रीहीन् प्रोक्षति व्रीहीनवहन्ति" इत्यादौ प्रोक्षणादिजन्यः । कालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते प्रोक्षिता व्रीहय एवावघाताय कल्प्यन्ते" कुसु० तथाचावघातजन्यः संस्कारः व्रीहिनिष्ठ इति मीमांसकाः । नैयायिकास्तु "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिषु" कुसु० उक्तेः पुरुषएव संस्कारोऽदृष्टविशेषो जन्यत इत्याहुः अवघातश्च धर्म्मिणि सत्येव तदीयवितुषीकरणरूपपरिष्कारंरूपः २हननमात्रे ३ताड़नमात्रे च "कर्णावघातैरपि ताड्यमाना दूरीकृताकरिवरेण" "अधरे दत्तदन्तावघाते" सा०द० ।

**अवघातिन्** त्रि० अव+हन—णिनि । अवघातके स्त्रियां ङीप् ।

**अवघुष्ट** त्रि० अव+घुष—क्त । घोषणया प्रचारिते ।

**अवघूर्णन** न० अव+घूर्ण—भ्रमणे भावे ल्यु । सर्व्वतोभ्रमणे ।

**अवघोटित** अव+घुट—परिवर्त्ते क्त । सर्व्वतोवेष्टिते समन्तात् परिवृते । सह "शिविकया मायादवघोटितया स्वनगरमनुप्राप्य" भा०व०प० । [युच् । अवघोषणापत्र स्त्री ।

**अवघोषण** न० अव+घुष—भावे ल्युट् । सर्वजनज्ञानायोच्चैर्घोषणे

**अवघ्राण** न० अव+घ्रा—भावे ल्युट् । आघ्राणे "पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात्" का० २०५११ "अवघ्राणमितरेषु" का० २२, १०, ४। इदञ्च भोजनानुकल्पतया शिष्टैरुक्तम् । अतएव श्राद्धशेषभोजनस्यावश्यकतया उपवासदिने तदवघ्राणमात्रम् विहितम् "आघ्राय पितृसेवितमिति" स्मृतेस्तथाचरणम् ।

**अवचक्षण** त्रि० अव+चक्ष—ल्यु । निन्दिताख्यानकर्त्तरि "कुत्साभीक्ष्ण्यायोरर्थे एतस्य तिङ्परत्वे अनुदात्तत्वम् ।

**अवचन** न० न वचनं कुत्सायां न०त० १निन्दायाम् । अभावे न०त० । २ कथनाभावे "प्रकृतौ चावचनात्" कात्या० । २०, ७, २१, "अवचनेऽग्निष्टोमः" । कात्या० २२, १, २ । न०ब० । ३वचनशून्ये त्रि० "शकुन्तला साध्वसादवचना तिष्ठति" । शकु० ।

**अवचनीय** त्रि० वक्तुमनर्हः वच—अर्हार्थे अनीयर् न०त० । १वक्तुमनर्हे अश्लीलादौ शब्दे "वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्" मनुः १वचनीयं निन्द्यम् न०त०। २निन्द्यभिन्ने त्रि०

**अवचय** पु० अव+चि—अच् । पुष्पफलाद्यादाने । "ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ" शकु० ।

**अवचाय** पु० अव+चि "हस्तादाने चेरस्तेये" पा० अचोबाधको घञ् । हस्तेन पुष्पफलाद्यादाने । "अविरतकुसुमावचायखेदा" माघः । अव+चि—णमुल् अवचायम् । अभीक्ष्णमवचित्येत्यर्थे अव्य० ।

**अवचारण** त्रि० अव—चर—णिच्—ल्युट् । १प्रचारणे सुश्रुतोक्ते २क्षारपाकविधौ च "विशेषक्रियावचारणाञ्च" "चैतानि यक्षयं जातीः पोषयं सावचारणम्" "शुक्रदोषचयकरं यथास्वमवचारणम्" सुश्रुतः ।

**अवचूड़(ल)** पु० अवनता चूड़ायं यस्य वा डोलः । १ध्वजाधोबद्धे वस्त्रे । "पिच्छावचूड़कलनामिवोरः" "पिच्छावचूड़मनुमाधवधाम जग्मुः" इति च माघः "अस्योच्छ्रावचूड़ाख्यौ मूर्द्धाधोमुखचूड़योरिति" हला० उक्तेः २ध्वजाधोमुखाङ्गे चामरादौ च ।

**अवचूर्णन** न० सुश्रुतोक्ते १व्रणरोगभेदे । "तत्र व्रणस्य षष्टिरुपक्रमा भवन्ति" इत्युपक्रम्य "सर्पिस्तैलं रसक्रियावचूर्णनव्रणधूपनम्" इत्युक्ता "तेषु कषायो वर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनमिति शोधनरोपणानीति" । अव+चूर्ण—भावे ल्युट् । २पेषणे । चूर्णैरध्वंसते अवचूर्णयति अव+चूर्ण+अवध्वंसार्थे णिच्—भावे ल्युट् । ३चूर्णनेनावध्वंसे ।

**अवचूर्णित** त्रि० अव+चूर्ण—पेषे कर्म्मणि क्त । १पिष्टे । अवचूर्णयतेर्नामधातोः क्त २चूर्णने नावध्वस्ते ।

**अवचूल** न० अवचूड़वत् विग्रहः । ध्वजाधःस्थे १चामरादौ ध्वजाद्यङ्गे "दिवसकरवारणस्यावचूलचामरकलाप इव" काद० । [चामरे त्रिका०

**अवचूलक** न० अवचूलमिव इवार्थे कन् संज्ञायांवा कन् ।

**अवच्छिन्न** त्रि० अव+छिद—क्त । अवच्छेदः विशेषणोपाधिना विशेषकरणम् । उपाध्यादिना विशेषिते अवच्छेदकतानिरूपिते च "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न

स्थिभवं संतक्षणेन, दारवं मृण्मयञ्च जह्यात् । अत्यन्तोपहतस्य प्रक्षालितस्य निरवद्य तच्छिन्द्यात्" विष्णुः "अत्यन्तोपहतानां सर्व्वतैजसानामग्निना शौचं मृण्मयचर्मणां त्यागः, तन्मात्रच्छेदमित्येके धारणं हि नववाससां शौचमित्याचार्य्याः तस्मात् सर्व्ववाससामाप्लावनादेव शुद्धिः" हारी० "तैजसानां कुणपरेतोमूत्रपुरीषोपहतानामावर्त्तनमुल्लेखनं भस्मना त्रिःसप्तकृत्वः परिमार्जन मुच्छेदनं वा" शङ्खलि० "मूत्रपुरीषासृक्कुणपस्पृष्टानां तैजसानां पात्राणां पूर्व्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्ज्जनम्" "क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णिकानि भवन्ति मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाद्भिः प्रक्षालनं वासोवदूर्णावल्कलानां, वल्कलवत् कृष्णाजिनानाम्" इति च बौधा० "मद्यैर्मूत्रपुरीषैश्च श्लेष्मभिरस्नुशोणितैः । संस्पृष्टं नैव शुध्येत पुनःपाकेन मृण्मयम् । एतैरेव यदा स्पृष्टं ताम्रसौवर्णराजतम् । शुध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा" शङ्खलिखितकाश्यपाः "अलाबुदारुपात्राणां वैदलानां तथैव च । अत्यन्तोपहतानाञ्च परित्यागो विधीयते । अत्र मूत्रपुरीषाभ्यां रेतसा रुधिरेण च । चेलं यदुपहन्येत पुनः प्रक्षालयेत्तु तत् । यद्यम्भसा न शुध्येत्तु वस्त्रं वोपहतं दृढम् । छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते । मृत्तिकाक्षारपातेन अशुद्धं तत् परित्यजेत्" यमः। "वस्त्रवैदलचर्म्माद्यो शुद्धिः प्रक्षालनं स्मृतम् । अतिदुष्टस्य तन्मात्रं त्यजेच्छित्त्वात्मशुद्धये" वृह० । "दूषितं वर्जितं दूष्यं कश्मलं चेति लिङ्गिनाम् । चतुर्व्विधममेध्यं च सर्व्वं व्याख्यास्यते पुनः। शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते। अभक्ष्यभोज्यपेयानि वर्ज्जितानि हि वक्ष्यति । न्यङ्कुः पतितचण्डालौ ग्रामसूकरकुक्कुटौ । श्वा च नित्यं विवर्ज्याः स्युः षडेते धर्मतः समाः । सव्रणः सूतको सूती मत्तोन्मत्तौ रजस्वला । मृतवन्धुरशुद्धश्च वर्ज्यान्यष्टौ स्वकालतः । स्वेदाश्रुविन्दवः फेनोनिरस्तं नखरोम च। आर्द्रचर्म त्वगित्येतद् दूष्यमाहुर्द्विजातयः । मानुषास्थिकफोविष्ठारेतोमूत्रार्त्तवानि च । कुणपः पूयमित्येतत् कश्मलं चेत्युदाहृतम् । दूषिते प्रोक्षितेनापि शुद्धिरुक्ता विधानतः । दूष्ये मार्ज्जनसंस्कारैः कश्मले सर्व्वथा भवेत्" देवलः। अथ भूमिशुद्ध्यशुद्ध्यपवादि । "प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः । चण्डालैरुषितं यत्र यत्रोपन्यस्यते शवः । विण्मूत्रे चाहिते यत्र कुणपो यत्र दृश्यते । एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते । कृमिकीटपदक्षेपै र्दूषिता यत्र मेदिनी । लक्ष्यया कर्षणैः क्षिप्ता वान्तैर्वा दूष्यतां व्रजेत् । नखदन्ततनूजत्वक्तुषपांशुरजोमलैः । भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् । पञ्चधा वा चतुर्द्धा वा भूरमेध्या विशुध्यति । दूष्या द्विधा त्रिधा वापि शोध्यते मलिनैकधा । दहनं खननं भूमेरुपलेपनवापने । पर्ज्जन्यवर्षणं चेति शौचं पञ्चविधं स्मृतम्" देव०।तस्या घनीभूतश्लेष्मा "संमार्जनेनाञ्जनेन सेकेनोल्लिखनेन च । गवां च परिवासेन भूमिः शुध्यति पञ्चभिः" मनुः। "खननात् पूरणाद्दाहाल्लेपनादभिवर्षणात्। गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः" यमः। "घनाया भूमेरुपघाते उपलेपनम् सुषिरायाः कर्षणम् आच्छन्नाया मेध्यमाहृत्य प्रच्छादनम् चतुर्भिः शोध्यते भूमिः गोभिराक्रमणात् खननाद्दहनादभिवर्षणात् पञ्चमाल्लेपनात्" बौधा० "कर्षणमुपलेपनमद्भिरभ्युक्षणं कालोदाहश्च भूमेः" शङ्खलि०शुद्धिरिति शेषः। "खननात् पूरणाद्दाहाल्लेपनादभिवर्षणात् । गोभिराक्रमणात् कालात् भूमिरेभ्यो विशुध्यति" हारी०। "मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम् । मार्ज्जनेनाञ्जनेनापि सेकेनोल्लेखनेन च। दाहेन च भुवः शुद्धिर्वासेनाप्यथ वा गवाम्" विष्णुः "गोचर्म्ममात्रमब्विन्दुर्गौः (भूमेः) शोधयति पातितः समूढमसमूढं वा यत्र लेपो न दृश्यते" बौधा० मृतौ वर्णादिशेषे कालभेदः । अस्पृश्यपतिताश्चान्त्या मृताश्चेद् द्विजमन्दिरे । शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा । दशरात्राच्छुनि प्रेते मासात् शूद्रे भवेच्छुचिः । द्वाभ्यां तु पतिते गेहे अन्त्ये मासचतुष्टयात् । अत्यन्ते वर्जयेद्गेहमित्येवं मनुरब्रवीत्" वृ०मनुः । अन्त्यः श्वपाकः । द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात् । दिनैकेन बहिर्भूमिरग्निक्षेपप्रलेपनैः" यमः। यथोक्तकालानन्तरं कर्त्तव्यमाह संवर्त्तः "गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते । प्रोत्साय्य मृण्मयं पात्रं सिद्धमन्नं तथैव च । गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् । गोमयेनोपलिप्याथ छागेनाघ्रापयेद्बुधः । ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः । सर्व्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयः । "दारुवदस्थि भूम्योरावपनं च भूमेः" गौत० "मार्जनाद्वेश्मनां शुद्धिः" क्षितेः शुद्धिस्तु सप्तभिः" शङ्खः। अशुद्ध्यपवादः "ब्राह्मणावसथे भूमिर्देवागारे तथैव च । मेध्या चैव सदा मन्ये गवां गोष्ठे च या भवेत्" यमः। "रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनाच्च प्रदुष्यन्ति पक्वेष्टरचितानि च" परा०

रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यैश्च वायसैः। मरुतार्केण शुध्यन्ति पक्केष्टरचितानि च। तथैभिश्च विशुध्यन्ति सूर्य्यसोमांशुमारुतैः" विष्णुः। अथ मृत्तिकाशुद्धिः "वल्मीकादुत्करान्मेपाञ्जलाध्वपथिवृक्षयोः। कृतशौचावशिष्टाश्च न ग्राह्याः सप्त मृत्तिकाः। शुचिदेशे च संग्राह्याः शर्कराश्मादिवर्ज्जिताः" शाता०। अथ पक्वान्नादिशुद्धय्रदुद्धुपायाः। "केशकीटक्षुतघ्रातं वायसोपहतञ्च यत् क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः। दूष्यं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते। अभ्युक्ष्य किञ्चिदुद्धृत्य तद्भुञ्जीता विशङ्कितः। भस्मना वापि संस्पृश्य संस्पृश्य वोल्मुखेन च। सुवर्णरजताभ्यां च भोज्यं घ्रातमजेन वा"। घृतं सपायसं क्षीरं तथैवेक्षुरसो गुडः। शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति" शाता० "त्वक्केशकीटरोमनखास्नुपुरीषाणि दृष्ट्वा तद्देशपिण्डान्नमुद्धृत्याद्भिरभ्युक्ष्य भस्मनावकार्य्याभिघार्य्य पुनरपि प्रोक्ष्य वाचा प्रशस्तम् ओं भूर्भुवः स्वरित्युपरि परिशोध्य च पुनरेवोपयुञ्जीत" बौधा०। "मसूरमाषसंयुक्तं तथा पर्य्युषितं च यत्। तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्" यमः "माषाराजमाषाः" हेमा०। पर्य्युषितभोजनविधानमापद्विषयम् "शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन। क्षालयित्वा तु निर्दोषाण्यापद्धर्म्मगतो यदा" तस्यैव वचनान्तरात् "मक्षिकाकेशमक्षेषु पतितं यदि दृश्यते। मूषिकस्य पुरीषं वा क्षुतं यच्चावधूनितम्। भस्मनास्पृश्य चाश्नीयादभ्युक्ष्य सलिलेन वा" यमः। क्षुतेनाक्रान्तमवक्षुतम् अवधूनितं वस्त्रेण। "अवक्षुतं काकपतङ्गकीटैरुदक्यया वा पतितैश्च दृष्टम्। चण्डालभक्षाम्बुहिरण्यकाग्रैः संस्पृष्टमन्नं मनुराह भोज्यम्" यमः। अस्यापवादः "मक्षिका मशकादंशा यूथा सूक्ष्मपिपीलिका। आमिषामेध्यसेवी च नैते कीटा निसर्गतः। यमः "पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति" मनुः। गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते। सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये। अत्र मक्षिका विष्ठामक्षिका "केशकीटक्षुतनिष्ठीवित वचोऽभिहतं श्वभिराघ्रातं प्रेक्षितं यच्च पर्य्युषितम् पुनः सिद्धं चण्डालेनावेक्षितमभोज्यमन्नमन्यत्र हिरण्योदकस्पर्शात्" सुमन्तुः "आकरजानां त्वव्यवहरणीयानां घृतेनाभिघारितानां शुद्धिः पुनःपचनमेव स्नेहानां, स्नेहवद्रसानां, संहतानामद्भिः प्रोक्षणमतिद्रवाणामुत्पवनम्, शुष्काणामुद्धृतदोषाणां संस्कारः परिस्रावितानां, दोषाणां ततस्त्यागः" शङ्खलि०। "परोक्षमन्नं संस्कृत्य अग्नावधिश्रित्याद्भिः प्रोक्षेत्तदन्नं पवित्रम्" आप०। "अनिष्टगन्धोपघ्राणश्रवणदर्शन केशकीटपिपीलिकाभिरन्नाद्योपघाते काञ्चनरजतवैदूर्य्यप्रवालगोवालाजिनदर्भाणामेकतमेनाद्भिः संसृष्टेन मन्त्रप्रोक्षणं पर्य्यग्निकरणमादित्यदर्शनात् पूतं भवति बहुन्नोपघाते ब्राह्मणमत्या तदन्तरमपनीय अजमवघ्राप्य पूतं भवति त्यागोरसमयानाम्" हारी०। सिद्धहविषां महतां श्ववायसप्रभृत्युपहतानां तद्देशपिण्डमुद्धृत्य "पवमानः सुवर्ज्जनः" इत्यनुवाकेनाभ्युक्षणं मधूदके पयोविकारे च पात्रान्तरनयने शुद्धिः एवं तैलसर्पिषी, उच्छिष्टसमन्वारब्धे तूदकेऽवधायोपयोजयेत्" बौधा० उच्छिष्टसमन्वारब्धे उच्छिष्टसंसृष्टे" हेमा०। पयोदधिविकारादि शुचि पात्रान्तरे स्थितम्। पावनोत्पवनाभ्यां च पर्य्यग्निकरणेन च" लौगा० "पवनं वस्त्रादिना गालनम् उत्पवनं दर्भपवित्रेण "सवितुष्ट्वा प्रसव उत्पुनामि" इत्यनेन मन्त्रेण संस्करणम्। "आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः। म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः" यमः "अपणं घृततैलानां प्लावनं गोरसस्य च। भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च। सिद्धमन्नं तथा सर्पिः क्षीरञ्च दधि चाम्बु च। एतेषामवलीढानां तैजसी शुद्धिरिष्यते काकमार्जारनकुलसर्पमूषिकपक्षिभिः। संकृतं तु यदाहार्य्यमवलिह्येत केनचित्। सुवर्णवर्णताम्रोष्णगौवालै रजतेन वा। स्पृष्टमेकतमेनापि भोज्यं घ्रातमजेन वा" शङ्ख०। तैजसी शुद्धिः पर्य्यग्निकरणम्। इयं शुद्धिः केशादिकं दूषकमुद्धृत्य कार्य्या" हेमा०। "घृतदधिपयस्तक्राणामाकरस्थितानामदोषः" ऋष्यः "आधारदोषे तु नयेत् पात्रात् पात्रान्तरं द्रवम्। घृतं तु पायसं क्षीरं तथैवेक्षुरसं गुडम्" द्रवद्रव्याणि भूरीणि परिप्लाव्यानि वाम्भसा। घस्यानि व्रीहयश्चैव शाकमूलफलानि च। त्यक्त्वा तु दूषितं भागमाप्लाव्याथ जलेन च। ब्रह्मा० पु०। "द्रोणादभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति। तस्योपहतमात्रमपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः क्षिपेत् वस्तस्य च दर्शयेदग्नेः" । विष्णुः। "शृतं द्रोणाधिकं चान्नं श्वकाकैरुपघातितम्। न त्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत्। कर्त्तव्यं वचनं तेषामसंस्कारकर्म्मणि" "द्रोणाधिकस्य शुद्धिस्तु धर्म्मशास्त्रेषु पठ्यते। श्वकाकैरवलीढं तु द्रोणान्नं न विसर्ज्जयेत्। ग्रासमुद्धृत्य तन्मात्रं यच्च लालाङ्कितं भवेत्। सुवर्णोदकेनाभ्युक्ष्य

सर्वत्र शुद्धता न पुनर्भवेत् । तस्मात्कुर्व्वीत कर्मण्यं शुची-
न्याहुर्मनीषिणः। निर्मलं संस्कृतं द्रव्यं क्रियार्हं पूतमुच्यते।
वसतिश्चमसोपानं वाहनं साधनाम्बु च । कुटी नौरासनं
चेति स्वयं शुद्धमिति स्मृतम् । शिशवश्च स्वयंशुद्धा
योषितश्चानृतौ तथा । ब्रह्महत्या हि नारीणामृतु-
काले न संस्पृशेत् । आकरा हि स्वयं शुद्धा द्रव्याणामिह-
निर्णयः । भस्म क्षौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः ।
अपामार्गशमीकाशाः पद्ममामलकं मणिः । माल्यानि
सर्षपा दूर्वाः सदाभद्राः प्रियङ्गवः । अक्षतारोचनालाजा
हरिद्राश्चन्दना यवाः । पलाशखदिराश्वत्थतुलसीधातकी-
तकी । एतान्याहुः पवित्राणि ब्राह्मणा हव्यकव्ययोः ।
यौक्तिकानि मलघ्नानि शोधनानि च देहिनाम् ।
तेष्वापोगोशकृन्मूत्रं पवित्राणि विशेषतः । सर्वाशौच
विशुध्यर्थं सर्वेषां सर्वतः सदा । अकामतः समिद्धोऽग्नि-
र्दुर्मनुष्यैरदूषितः । सर्वेषामप्यशौचानां समर्थः शोध-
नाय सः । द्रव्याणामग्निदग्धानां मेध्यत्वमुपदिश्यते ।
ज्वालाभिर्दृष्टपात्राणां शुचित्वं नियतं भवेत् । अग्ने-
र्वृषलयुक्तस्य ग्रहणं नास्त्यनापदि । श्वपाको वृषलाभस्तु
ब्राह्मणोऽग्निरनाहितः । चण्डालाग्नेरमेध्याग्नेः सूत-
काग्नेश्च कर्हिचित् । पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं
स्मृतम् । गोयमच्छूद्रदेशस्था श्मशानाद्यचिता शिवा ।
अपास्या स्वह्नवेच्छुद्धा सत्त्वा विण्मूत्रवर्जिता । ऊर्द्ध्वं नाभे-
र्यानि खानि तानि मेध्यानि सर्वशः" देवलः । "ऊर्द्ध्वं वै
पुरुषस्य नाभेर्मेध्यमर्वाचीनममेध्यमिति" श्रुतिः । "अजाश्वं
मुखतोमेध्यं न गौर्न नरजा मलाः" विष्णुः ऊर्द्ध्वं नाभेः
पुरुषोगौर्मेध्यः पृष्ठे समन्तादश्वः स्त्रियः सर्वतो हृदय-
माषामशुचि" उश० । "मेध्या रहोगता नारी स्त्री मुखे
शुचिचारिणी । स्पर्शने तु न दुष्यन्ति वातो गन्धोरसः
स्त्रियः । स्त्रीणां मुखरसश्चैव गन्धोनिश्वास एव च । मु-
खतोगौरमेध्यास्यात् मेध्योऽजोमुखतः स्मृतः । पृष्ठतोगौर्गजः
स्कन्धे सर्वतोऽश्वः शुचिस्तथा । नृणां मूत्रपुरीषे तु अमे-
ध्ये मल एव च । गोपुरीषं तु मूत्रं च नित्यं मेध्यमिति
स्थितिः । यमः "पादौ शुची ब्राह्मणानामजाश्वस्य मुखं
शुचि । गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ।
रोमोद्भेदे शशी भुङ्क्ते गन्धर्वाः कुचदर्शने । अनलस्तु
रजोभुङ्क्ते स्त्रियोमेध्यास्तु नान्यथा । बलात्कारोपभुक्ता
वा चौरहस्तगतापि वा । स्वयं वा प्रतिपन्ना वा
अथवा विप्रमादिता । अत्यन्तदूषितापि स्त्री न परित्या-
मर्हति । सर्वेषां निष्कृतिः प्रोक्ता नारीणां तु विशेषतः ।
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् । मासिमासि
रजस्तासां दुष्कृतान्यपकर्षति । सोमः शौचं ददौ स्त्रीणां
गन्धर्वश्च शुभां गिरम् । पावकः सर्वभक्षत्वं मेध्या वै-
योषितो ह्यतः" । ज्योतिषोक्तम् स्वराद्यपेक्षया दुष्टरूपे
अनिष्टस्थानस्थरव्यादिकतयानिष्टसूचनमपि अशुद्धिः
ज्योतिषोक्तनञः पर्य्युदासप्रसज्यप्रतिषेधोभयपरतायाः
सर्वनिबन्धृभिर्व्यवस्थापनात् तत्र निषिद्धकालस्य न केवलं
रात्र्यादिकालादिवत् पर्य्युदस्तता किन्तु प्रसज्यप्रतिषेध-
परतया अनिष्टविशेषसूचकतापि तेन तत्र तत्र अनि-
षिद्धकालस्याशुद्धता । अतएव गोचराशुद्धिः कालाशुद्धि-
रिति च व्यवह्रियते" तथाच ज्योतिषोक्तदिशा तत्तत्-
कालानां तत्तत्कर्म्मकरणायोग्यताप्रयोजकतया शुक्रा-
स्तादिकालस्याशुद्धता सा च अकालशब्दे उक्तप्राया । "र-
विशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ" इत्युक्तेः गो-
चरे शुभस्थानस्थितौ रव्यादीनां शुद्धिस्तद्वैपरीत्ये अशुद्धिः
एवं वर्षर्त्तुमासदिवसानामप्यशुद्धिः सा च कन्यकानां
दशवर्षाभ्यन्तरे एव विवेचनीया नातः परम् । "ग्रहशुद्धि
मब्दशुद्धिं शुद्धिर्मासर्त्तुदिवसानाम् । अर्व्वाग्दशवर्षेभ्यः
प्रवदन्ति कन्यकाना"मित्युक्तेः ।

**अशुभ** न० विरोधे न०त०। १अमङ्गले "यः सर्व्वत्रानभिस्नेह-स्तत्तत् प्राप्य शुभाशुभम्" गीता । २तत्सूचके रव्यादिपापग्रहे "अशुभे दण्डसंयोगे वैधव्यं तेन लभ्यते" ज्योति० अशुभसूचका अमङ्गलसूचकास्ते च साधारणा असाधारणाश्च अमङ्गलशब्दे २१६ पृष्ठादौ दर्शिताः अन्येऽपि अशुभयोगा अरिष्टाध्यायोक्ताः असाधारणा वेदितव्याः । २अपवित्रे च न०ब०। ४शुभाभाववति त्रि०।५ब०।५पापे न०।

**अशुभ्र** पु० विरोधे न०त०। १शुभ्रभिन्ने कृष्णे २तद्युते त्रि०।

**अशुष** त्रि० न शुष्यति शुष—क न०त०। अशोषके । "रक्षो अग्निमशुषं तूर्वयाणम्" ऋ० १।१७४।२ ।

**अशून्य** त्रि० न०त०। अहीने पूर्णे "अशून्यशयनं भूयान्मम जन्मनि जन्मनि" शय्यादानमन्त्रः ।

**अशून्यशयन** न० न शून्यं शयनं यस्मात् । व्रतभेदे । "अस्ति व्रतं महापुण्यमशून्यशयनं नृप!" इत्युपक्रम्य "चातुर्मास्ये भवेद्राजन् वर्षायाम् व्रतमुत्तमम् श्रावणस्य द्वितीयायां कृष्णपक्षे नराधिप!। श्रावणादिकार्त्तिकान्तं कुर्य्याद्व्रतमनुत्तमम्" इत्यादिना तस्य विधानमभिधाय "चतुर्वर्षं मकुर्वीत पुरुषोनियतेन्द्रियः । एवं यः कुरुते राजन्

शून्यशयनव्रतम्। न तस्य शून्या शय्या स्यादिति” च हेमा० व्रत० ख० भविष्यपुराणम्।

**अशृत** त्रि० न शृतं पक्वम्। अपक्वे पक्वभिन्ने १आमान्नादौ।

**अशेव** त्रि० शी—वनिप् न०त०। सुखकरे। “व्येतु दिद्युद्द्विषामशेवा” ऋ० ७।३४।१२।

**अशेष** पु०अभावे न०त०। १शेषाभावे। न०त०। २शेषशून्ये सकले त्रि० “अशेषशेमुषीमोषं माषमश्नामि केवलम्” उद्भटः “क्रतोरशेषेण फलेन युज्यताम्” रघुः“येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि”गीता“तथाविधस्ताव दशेषमस्तु सः” कुमा०। “अशेषतीर्थोपहृताः कमण्डलोः” माघः।

**अशोक** पु० नास्ति शोको यस्मात् ५ब०। १स्वनामख्याते वृक्षे, २बकुलवृक्षे च। ३पारदे न०। ४कटुकवृक्षे स्त्री। ङीप्। ५शोकशून्ये त्रि० ६विष्णौ पु० “सत्यनामा भवाशोकः” “अशोकः शोकनाशनः” इति च विष्णुस०। “अशोकमर्थान्वितनामताशया गतान् शरण्यं गृहशोचिनोऽध्वगान्। अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्ज्वलदस्त्रजालकम्” नैष० “सनूपुररवेण स्त्रीचरणेनाभिताड़नम्। दोहदं तदशोकस्य ततः पुष्पोद्गमोभवेत्” एतदनुसारेणैव कविभिस्तथा वर्ण्यते यथा “असूत सद्यः कुसुमान्यशोकःस्कन्धात् प्रभृत्येव सपल्लवानि। पादेन नापैक्षत सुन्दरीणां संसर्गमाशिञ्जितनूपुरेण” कुमा० नवकिसलयरागेणार्द्रपादेन बाला स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन। अकुसुमितमशोकं दोहदापेक्षया वा प्रणमितशिरसं वा कान्तमार्द्रापराधम्” “अनेन तनुमध्यया मुखरनूपुराराविणा नवाम्बुरुहकोमलेन चरणेन सम्भावितः। अशोक! यदि सद्य एव कुसुमैर्न सम्पत्स्यसे मुधा वहसि दोहदमिति” “सर्वाशोकलतानां प्रथमं सूचितवसन्तविभवानाम्। निर्वृत्ते दोहदेऽस्मिन् संक्रान्तानीव मुकुलानि” इति च मालवि०। अयमशोकः नवपत्रिकान्तर्गतः “कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः। विल्वोऽशोको जयन्ती च विज्ञेया नव पत्रिकाः” दु०त०। एतदधिष्ठात्री शोकरहिता “अशोकस्यायै शोकरहितायै” इति दुर्गापूजापद्धतिः। अशोकश्च द्विविधः रक्ताशोकः पीताशोकश्च पीतरक्तपुष्पभेदेन तयोः तथात्वम्। तत्र रक्ताशोकाभिप्रायेण “अशोकनिर्भर्त्सितपद्मरागम्” कुमा०। “रक्ताशोकलताविशेषितगुणोविम्बाधरालक्तकः” मालवि० पीताशोकवर्णनं तु मालविकाग्निमित्रे तृतीयाङ्के तपनीयाशोकवर्णने दृश्यम्। “अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः। कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा। अशोकः शीतलः स्निग्धो ग्राही वर्ण्यः कषायकः। दोषापचीतृषादाहकृमिशोषविषास्रजित्”भा०प्र०पर्य्यायगुणादि। चान्तः शोकाभावे त्रिका०।

**अशोकतीर्थ** न० अशोकनामकं तीर्थम्। काशीक्षेत्रान्तर्गते तीर्थभेदे। काशीस्थप्रयागतीर्थमधिकृत्य “अशोकाख्यमिदं तीर्थं गन्धर्वेशव एष वै। मोक्षद्वारमिदं श्रेष्ठं स्वर्गद्वारमिदं विदुः”। काशी०।

**अशोकत्रिरात्र** न० न शोको यत्र तादृशं त्रिरात्रम्। हेमा० व्र०ख०भविष्योत्तरोक्ते व्रतभेदे तत्कालादिस्तत्रैवोक्तः “अस्त्यशोकत्रिरात्राख्यं व्रतं शोकभयापहम्। त्रिरात्रं तच्च कर्त्तव्यं व्रतं शोकविनाशनम्” इत्युपक्रम्य, मासि मार्गशिरे चैव ज्यैष्ठे भाद्रपदे तथा। शुक्लपक्षे पञ्चदश्यामेकभक्तं तु कारयेत्” इत्यादिना आरम्भकालमुक्त्वा “अनेनैव विधानेन प्रतिमासं च पूजयेत् यावत् द्वादश मासान् वै कुर्य्यादुद्यापनं ततः” इत्युक्तम्।

**अशोकपूर्णिमा** स्त्री नास्ति शोको यस्याः कर्म०। फाल्गुनपौर्णमासावधिवर्षपर्य्यन्तायां हेमा०व्र०ख० विष्णुधर्मोक्तव्रताङ्गे १पौर्णमास्यां तत्र प्रतिमासं कर्त्तव्ये २व्रते च यथा “अशोकपूर्णिमामेतां शृणुष्वैकमना मम। उपोष्य न नरः शोकं प्राप्नोति स्त्री तथाऽपि वा। फाल्गुनामलपक्षस्य पौर्णमास्यां स्पपोत्तम”। इत्युपक्रम्य विधानमुक्त्वा “अनेनैव प्रकारेण चत्वारः फाल्गुनादयः उपोष्या नृपते मासाः” इत्युक्त्वा च “आषाढादिषु मासेषु तद्वत् प्रोक्तं तथाम्बुना। चतुर्ष्वन्येषु च प्रोक्तं तथा वै कार्त्तिकादिषु” इत्यनेन वर्षसाध्यत्वमस्या उक्तम्।

**अशोकरोहिणी** स्त्री अशोक इव रोहति रुह—णिनि। कटकीति ख्यातायाम् कटुकायां कटुकाशब्दे विवृतिः।

**अशोकषष्ठी** स्त्री कर्म०। चैत्रोभयषष्ठ्याम् तत्र षष्ठीदेवीपूजनविधानात्तथात्वम्, “चैत्रे मासि सिते पक्षे षष्ठ्यां षष्ठीं प्रपूजयेत्। सुखाय पुत्रलाभाय शुक्लपक्षे तथैव च” उत्तरकामाख्यातन्त्रम्।

**अशोका** स्त्री नास्ति शोकोदुःखं सेवनादस्याम्। १कटुकायाम् (कटकी) शब्दा० ढक् आशोकेयस्तद्भवे त्रि०। २चैत्रशुक्लषष्ठ्याञ्च “सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी। वैशाखे चान्द्रनीत्युपक्रम्य चैत्रेऽशोका प्रकीर्त्तिता” स्क० पु० परिभाषोक्ता।

**अशोकारि** पु० अशोकं शोकाभावमृच्छति ऋ—इन् ६त०।

शोकाभावदायके कदम्बवृक्षे शब्दच० कदम्बशब्दे विवृतिः।

**अशोकाष्टमी** स्त्री नास्ति शोकोयस्याः कर्म्म०। चैत्रशुक्लाष्टम्यां, सा हि अशोककलिकापानादशोकदायिका। यथोक्तं हेमा०व्र०ख० लिङ्गपुरा०। “अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ। चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः।” कूर्म्मपुरा०। चैत्रे मासि सिताष्टम्यां बुधवारे पुनर्वसौ। अशोककुसुमैरुद्रमर्चयित्वा विधानतः। अशोकस्याष्ट कलिका मन्त्रेणोक्तेन भक्षयेत्।” शोकं नैवाप्नुयान्मर्त्यः” अत्र बुधपुनर्वसुयोगः प्राशस्त्यार्थः हेमा०। “अशोककलिकापानमशोकतरुपूजनम्” शुक्लाष्टम्यां तु चैत्रस्य कृत्वा प्राप्नोति निर्वृतिमिति” लैङ्गे चैत्रशुक्लाष्टमीमात्रस्य निमित्ततोक्तेः। मन्त्रस्तु तत्रैव दृश्यः।

**अशोच्य** त्रि० शुच—कर्म्मणि ण्यत् न०त०। शोचनानर्हे यमुद्दिश्य शुच्यते तद्भिन्ने। ‘अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे” गीता।

**अशोधन** न० अभावे न०त०। १शोधनाभावे। न०ब०। २शोधनशून्ये त्रि०। शोधनञ्चाशुचेर्जलादिना मलाद्यपनयनम् ऋणादेः प्रतिदानञ्च तदभावोऽशोधनम्।

**अशोधित** त्रि० न०त०। १अप्रक्षालिते जलादिनाऽकृत मलाद्यपनयने २अकृतर्णादिप्रतिदाने च।

**अशोभन** त्रि० शुभ—कर्त्तरि ल्यु न०त०। १शोभनभिन्ने कुत्सिते। भावे ल्युट् अभावे न०त०। २मण्डनाभावे।

**अशोष्य** त्रि० शुष—णिच्—ण्यत् न०त०। शोषयितुमशक्ये। “अच्छेद्योयमदाह्योऽयमक्लेद्योऽशोष्य एव च” गीता।

**अशौच** न० शुचेर्भावः शौचं न०त०। १शुचित्वाभावे स्मृतिप्रसिद्धे, विहित-तकर्म्मानधिकारित्वसम्पादके २अधर्म्मविशेषे च। “जनने मरणे चैव त्र्यहाशौचस्य भागिनः” स्मृतिः। “समानं लघु चाशौचं पूर्व्वेणैव विशुध्यति। असमानं द्वितीयेनेति” यमः। स्वार्थे ष्यञ् आशौच्यमप्यत्र “आशौच्याद्विप्रमुच्येत” स्मृतिः। “अशौचं द्विविधं कालकृतं वस्तुस्वभावकृतञ्च तत्र कालकृतं “सवर्णः सूतकीत्यादिना” अशुद्धिशब्दे ४८० पृष्ठे दर्शितम् तथाच। सपिण्डमरणजननादिकृतं कालविशेषेऽशौचम् कालापगमे च तन्नाशः। तच्च चेतननिष्ठम्। बहुधा चास्य शुद्धितत्त्वादौ प्रपञ्चः। वस्तूनामशौचं स्वभावात् यथा मलमूत्रादेः, यत्संसर्गादितरवस्तूनामप्यशौचं शुद्ध्यभावः एवं तेषां संसर्गादिकृतं चेतनादेरशौचं यथा उच्छिष्टचण्डालादिस्पर्शे एवमशौचिस्तामिकद्रव्यविशेषाणामाप्यशौचम् शुद्ध्यभावः। अथ सपिण्डासपिण्डादिभेदेनाशौचकालविशेषो यथा “जनने मरणे च सप्तमपुरुषपर्य्यन्तं विप्रस्य दशाहः, क्षत्रियस्य द्वादशाहः, वैश्यस्य पञ्चदशाहः, शूद्रस्य मासः। दशमपुरुषपर्य्यन्तं सर्व्ववर्णेषु त्र्यहः चतुर्दशपुरुषपर्य्यन्तं पक्षिणी जन्मनामस्मृतिपर्य्यन्तमेकाहः ततः स्नानमात्रम्। कन्यायाः सापिण्ड्यं त्रिपौरुषम्। अथ विदेशस्थाशौचम्। अशौचकालाभ्यन्तरे विदेशस्थस्याशौचश्रवणे शेषाहैः शुद्धिः। अशौचकालोत्तरश्रवणे तु ज्ञातिजननाशौचं नास्त्येव। पुत्रजनने तु सचेलस्नानात् शुद्धिः। मरणाशौचे तु वर्षाभ्यन्तरश्रवणे त्र्यहात् शुद्धिः। सचेलस्नानादङ्गास्पृश्यत्वनिवृत्तिः। वर्षोत्तरश्रवणे स्नानेन शुद्धिः सपिण्डानाम्। पुत्रादीनान्तु मातृपितृभर्तृमरणे वर्षोत्तरमेकाहेन शुद्धिः, द्वितीयवर्षे श्रवणे सद्यः। संपूर्णाशौचातिक्रमे त्र्यहाशौचं न बालाद्यशौचातिक्रमे खण्डाशौचातिक्रमे वा। अथ गर्भस्रावाशौचम्। गर्भस्रावे तु स्त्रीणामेव षण्मासाभ्यन्तरेऽशौचं तच्च लौकिके कर्म्मणि माससमसंख्यदिनव्यापकं द्वितीयमासावधिमाससमसंख्यदिनाधिकैकदिनात् परं ब्राह्मण्या वैदिककर्म्माधिकारः क्षत्रियाया दिनद्वयात् वैश्यायादिनत्रयात् शूद्रायास्तु दिनषट्कादिति हारलताप्रभृतयः। सप्तमाष्टममासीयगर्भपतने स्त्रीणां संपूर्णाशौचम् निर्गुणसपिण्डानामहोरात्रं यथेष्टाचरणपपिण्डानां त्रिरात्रम् तच्च जातस्य तद्दिनएव मरणे ज्ञेयं द्वितीयदिनादौ तु मरणे नवमादिमासजातबालकवत्। अथ स्त्र्यशौचम्। कन्यायाः जन्मप्रभृतिद्विवर्षाभ्यन्तरमरणे सद्यः शौचं तदुपरि वाग्दानपर्य्यन्तमेकाहः। वाग्दानोत्तरविवाहपर्य्यन्तं भर्त्तृकुले पितृकुले च कन्याया आदन्तजन्ममरणे सद्यः शौचम्, आ चूड़ादेकरात्रकम्, आ प्रदानात्त्रिरात्रं, स्यादिति विशेषः। दत्तकन्यायाः पितृगृहे प्रसवमरणयोः पित्रोः शयनादिसंसर्गशून्ययोरपि त्रिरात्रं तथाविधबन्धुवर्गाणामेकरात्रम् सम्पर्के दशरात्रम्। अथ बालाद्यशौचम्। नवमादिमासजातबालकस्याशौचकालाभ्यन्तरमरणे मातापित्रोरस्पृश्यत्वयुक्तं तद्देव जननाशौचं ज्ञातीनान्त्वशौचं नास्ति नवमादिमासमृतजातयोस्तु कन्यापुत्रयोः पित्रादिसपिण्डानां जननाशौचं संपूर्णम्। पुत्त्रजन्मनि मुखदर्शनात् पूर्व्वं सचेलस्नानं कृत्वा ब्राह्मणेभ्यश्च यथाशक्ति दत्त्वा बालकाय काञ्चनं दत्त्वा मुखं पश्येत्। ततः पुनः सचेलस्नानम्।

अन्याशौचमध्येऽपि जातकर्म्म षष्ठीपूजे कर्त्तव्ये। पुत्रजन्मनिमित्तकं वृद्धिश्राद्धं नाड़ीच्छेदात् पूर्व्वम् अशौचान्ते वा कर्त्तव्यम्। पुत्त्रकन्याजनने स्त्रीणां स्वजात्युक्तदशाहादितः परं लौकिककर्म्माधिकारः। पुत्त्रजनने तु वैदिककर्म्माधिकारोर्विंशतिरात्रोत्तरं स्नानात्, कन्याजनने तु मासोत्तरं स्नानात् ब्राह्मण्याः। शूद्रायास्तूभयत्रैव मासोत्तरं स्नानात् शुद्धिः। एतत् सर्व्वं पुत्त्रकन्ययोर्विद्यमानत्वे बोध्यम्। जननाशौचकालोत्तरं षण्मासाभ्यन्तरमजातदन्तमरणे पित्रोरेकाहः। एवं निर्गुणसोदरस्य, सपिण्डानान्तु सद्यः। षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे पित्रोस्त्र्यहः सपिण्डानामेकाहः षण्मासोपरि द्विवर्षपर्य्यन्तं पित्रोस्त्र्यहः। सपिण्डानामकृतचूड़े मृते एकाहः कृतचूड़े त्र्यहः। द्विवर्षोपरि सर्व्वेषामनुपनीतस्य मरणे मासत्रयाधिकषड़्वर्षं यावत् त्र्यहः। षड्वर्षोपनीतस्य तदानीमपि दशाहः। मासत्रयाधिकषड़्वर्षोपरि सर्व्वेषां दशाहः। शूद्राणां तु षण्मासोपरि द्विवर्षाभ्यन्तरे पञ्चाहः। अत्रापि कृतचूड़स्य द्वादशाहः। द्विवर्षोपरि षड़्वर्षाभ्यन्तरे द्वादशाहः। अत्रापि दैवात् कृतोद्वाहेऽपि मासः। षड़्वर्षोपरि मासः। अत्र मासवर्षपरिगणना सावनेन "स्रुतकादिपरिच्छेदोदिनमासाब्दपास्तथा, मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" इति सूर्य्य सिद्धान्तात्। अथासपिण्डाशौचं गुरु मातामहमरणे त्रिरात्रं भगिनीमातुलानी मातुलपितृष्वसृमातृष्वसृगुर्व्वङ्गनामातामहीमरणे पक्षिणी। श्वश्रूश्वशुरयोर्भिन्नग्रामस्थयोर्मरणेऽहोरात्रम्। आचार्य्यपत्नी पुत्रयोरुपाध्यायस्य मातृवंमात्रे वस्य ब्राह्मणस्य सहाध्यायिनः शिष्यस्य च मरणेऽहोरात्रं मातृष्वस्रीयपितृष्वस्रीयमातुलपुत्रभागिनेयमरणे पक्षिणी। पितामहभगिनीपुत्रपितामहीभ्रातृतद्भगिनीपुत्ररूपपितृबान्धवत्रयमरणे पक्षिणी। मातामहभगिनीपुत्रमातामहीभगिनीपुत्रमातामहीभ्रातृपुत्ररूपमातृबान्धवत्रयमरणेऽहोरात्रम्। एकग्रामवासिनोऽब्जमरणेऽहोरात्रम्औरसव्यतिरिक्तपुत्त्रजननमरणयोः परपूर्व्वभार्य्याप्रसवमरणयोश्च त्रिरात्रम्। सजातीयगुरुबान्धरसंस्कृहीतस्यभार्य्यामरणे त्रिरात्रम्। मातृष्वसृपितृष्वसृमातृलभगिनीपुत्राणां स्वगृहस्थितानामाचार्य्यस्य च मरणे त्रिरात्रम्। श्वश्रूश्वशुरयोःसन्निधिमरणे त्रिरात्रं श्वश्रूश्वशुरयोरेकग्रामस्थितयोर्मरणे पक्षिणी। प्रथममन्ये नोढ़ा तेनैव जनितपुत्त्रा पुत्रसहितैवानन्यमाश्रिता पश्चात्तेनापि जनितपुत्रा तयोः पुत्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्त्र-

पितुश्च त्रिरात्रं ततृसपिण्डानामेकरात्रं तथाविधपुत्त्रयोः परस्परप्रसवमरणयोर्मातृजात्युक्तमशौचम्। दौहित्रमरणे पक्षिणी। पितृमातृमरणे जड़ानां कन्यानां त्रिरात्रम्। यदि मातृष्वसृप्रभृतीनां दहनवहने करोति तदा त्रिरात्रम्। मातामहादीनां त्रिरात्राभ्यन्तरमरणश्रवणे तच्छेषेण शुद्धिः। तत्तत्कालोत्तरश्रवणे तु नाशौचं किन्त्वाचारात् स्नानम्। अथ मृत्युविशेषाशौचम्। शास्त्राननुमतबुद्धिपूर्व्वकात्मघातिनोनाशौचादि। शास्त्रानुमत्याऽनशनादिमृतस्य प्रमादादनशनाग्निवह्निजलोच्चदेशप्रपतनसंग्रामश्टङ्गिदंष्ट्रिनखिव्यालविषचाण्डालचौरहतस्य त्रिरात्रम्। शृङ्ग्यादिभिःक्रिया च क्रीड़ां कुर्व्वतः प्रमादहतस्यापि नाशौचादि। नागविप्रियकारित्वेन उद्वृतस्य मरणोद्देशेन प्रहृतस्य विद्युद्धतस्य च चौर्य्यादिदोषेण राज्ञा हतस्य च कलहं कृत्वा चाण्डालाद्यैरसमानैर्हतस्य च व्याधिजनकौषधस्य विषस्य वह्नेश्च दातुर्मरणे पापक्षयप्रायाश्रितस्य च नित्यं परापकारिणश्च क्रोधात् स्वयं प्रायोविषवह्निशस्त्रोद्वन्धनजलगिरिवृक्षप्रपातैर्हतस्य चर्म्मकांसास्थ्यादिमयपात्रनिर्म्मातृविप्रादेश्च मनुष्यवधस्यानाधिकारिणश्च कण्ठदेशोत्पन्नभगरोगस्य पुंश्चल्याःषण्ढपुंसकस्य च ब्राह्मणविषयापराधकरणाज्जिहतस्य च बुद्धिपूर्व्वकब्राह्मणहतस्य च महापातकिनश्च एवंविधपतितानां न दाहादिकं कार्य्यम्। तत्कृत्वा तप्तकृच्छ्रद्वयं कुर्य्यात्। म्लेच्छतस्करादिभिर्युद्धे स्वाम्यर्थं हतस्य विप्रादेर्दाहादिकमस्त्येव। अकृतप्रायश्चित्तस्य गलत्कुष्ठिनोन दाहादिकं कार्य्यं शस्त्रेणाभिमुखहतस्य सद्यः शौचं दाहादि च। गवार्थं ब्राह्मणार्थं वा दण्डेन युद्धहतस्याहोरात्रमशौचम्। नृपतिरहितयुद्धे लगुड़ादिहतस्य पराङ्मुखहतस्य त्रिरात्रम्। गोविप्रपालनेऽभिमुखपराङ्मुखत्वाभ्यां हतस्य सद्यस्त्रिरात्रे। शस्त्रघातेतरक्षते सप्ताहादूर्द्धं मरणे सम्पूर्णं, शस्त्रघाते त्र्यहादूर्द्धं च प्रकृताशौचम्। शुद्धि०त०। एतत्प्रमाणानि तत्रैव तु सन्त्येवानि। "मातृवद्वर्णसङ्कराः" इत्युक्ते र्मूर्द्धावसिक्ताम्बष्ठादीनामनुलोमजानां मातृवर्णानुसारेणाशौचम् प्रतिलोमजानां तु "शूद्रेण तु सधर्म्माणः सर्वेऽपध्वंसजाः स्मृताः" इत्युक्तेः शूद्रतुल्याशौचमिति रघुनन्दनादयः। आचारस्तु मातृतुल्यतया दृश्यते अतएव चण्डालादीनां दशाहाशौचाचारः। देवतामन्त्रादिदातुर्मरणे त्रिरात्रम्। वेदाङ्गादि शास्त्राध्यापकस्य तथाविधशिष्यस्य च मरणे एकाहः 'गृहीतो देवता मन्त्रः सावित्रीग्रहणं कृतम्। यस्मात्तस्य त्रिरात्रं स्यात् ब्रह्मविद्या महोवतः" इति "उपनीयाध्यापकोयस्तस्मिन्नपि

त्रिरात्रकम्। वेदवेदाङ्गशास्त्राणां व्याख्यानं शिक्षितं यतः। ज्ञानं प्रतिष्ठितं येन वेदाभ्यासोयतः कृतः। तस्मिन्मृते चैकरात्रं गुरोःशिष्ये तथैव" च मत्स्यसूक्तोक्तेः दत्तक पुत्रस्य पालकपित्रादिकुले त्रिरात्रम् जनककुलेऽशौचाभावः। तत्रायं विशेषः। सपिण्डदत्तकस्यापि त्रिरात्रं वाचनिकं तत्पुत्रादीनां तु संपूर्णमिति। असपिण्डदत्तकस्य तत्पुत्राणाञ्च त्रिरात्रमिति बहवः सपिण्डासपिण्डदत्तकतत्पुत्राणां त्रिरात्रमिति "भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः" इत्युक्तेरिति दत्तकमीमांसादयः। शवानुगमनाशौचम्। ब्राह्मणशवस्यानुगमने ब्राह्मणस्य सचेलस्नानाग्निस्पर्शघृतप्राशनैः शुद्धिः। क्षत्रियस्यैकाहेन, वैश्यस्य द्व्यहेन, शूद्रस्य प्राणायामशतेन दिनत्रयेण च शुद्धिः। प्रमादाच्छूद्रशवानुगमने जलावगाहाग्निस्पर्शघृतप्राशनैः शुद्धिः। अनाथब्राह्मणस्य धर्मबुद्ध्या दहनवहनयोः स्नानघृतप्राशनाभ्यां सद्यः शौचम्। लोभेन सजातीयदाहे स्वजात्युक्ताशौचम्। असजातीयशवस्य दहनवहनस्पर्शैः शवजात्युक्ताशौचम्। स्नेहादसम्बन्धिदाहकविप्रस्य तद्गृहवासे त्रिरात्रं तत्कुलान्नभोजने दशरात्रं तद्गृहवासे तदन्नाभोजने चाहोरात्रं विशेषवचनाभावे सम्बन्धिनोमातुलादेरस्नेहेनापि अदाहे त्रिरात्रं चिताधूमसेवने सचेलस्नानं मृते शूद्रेऽस्थिसञ्चयनकालाभ्यन्तरे तद्गृहं गत्वाऽश्रुपातने विप्रस्य त्रिरात्रम शौचं, स्थानान्तरे विशेषवचनाभावेऽहोरात्रं तद्गृहे तदूर्द्ध्वं मासाभ्यन्तरेऽहोरात्रं सचेलस्नानञ्च। सजातेर्दिवसेनैव क्षत्रियवैश्ययोर्द्व्यहेन ब्राह्मणः शुध्यति शूद्रस्तु स्पर्शं विनानुगमने सर्वत्र नक्तेन। मृतस्य शूद्रस्य बान्धवैः सह रोदनरहितविलापमात्रेऽहोरात्रेण। अस्थिसञ्चयनकालश्च ब्राह्मणस्य चतुरहः शूद्रस्य दशाहः। त्र्यहाशौचे द्वितीयाहः। मरणाशौचे विप्रस्य चतुर्थाहेऽस्पृश्यतानिवृत्तिः। शूद्रस्य दशमदिने सर्वस्य खण्डाशौचकाले त्रिभागकालेन अतिक्रान्ताशौचे सचेलस्नानेन जनने तु सपिण्डानां स्पृश्यतैव। पुत्रोत्पत्तौ स्नानात् पितुः स्पृश्यत्वं एवं विमातृणामपि। एवं सूतिकास्पर्शे पितुर्विमातृणाञ्च सूतिकातुल्यकालास्पृश्यत्वम्। अन्येषां स्नानमात्रं कन्या पुत्रजनने मातुर्द्दशरात्रमङ्गास्पृश्यत्वं शूद्रायास्तु दशरात्रमस्पृश्यत्वम्। अशौचकालादि विषये च प्रायोनिबन्धकर्तॄणां मतभेदोदृश्यते बाहुल्यभयात् तन्न लिखितम् स्वस्वदेशप्रचलितनिबन्धानुसारेण तदवसेयम्। अशौचे तु वर्णादि

विशेषादौ दश पक्षा हारलतायां दक्षेणोक्ताः यथा "सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड्दश द्वादशाहश्च पक्षोमासस्तथैव च। मरणान्तं तथा चान्यत् दश पक्षास्तु सूतके"। तत्र मरणान्तं जननमरणभिन्ननिमित्तम्। यथा "क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्" शु० त० स्मृतिः। "अस्नात्वा चाप्यहुत्वा च अदत्त्वाऽन्नं तथा द्विजः। एवंविधस्य विप्रस्य सर्व्वदा सूतकं भवेत्" दक्षः "अन्यपूर्व्वा यस्य गेहे भार्य्या स्यात्तस्य नित्यशः। अशौचं सर्व्वकार्य्येषु देहे भवति सर्व्वदेति" नि० सि० स्मृतिः "मरणान्तपक्षस्तु निन्दार्थवादपरः "नामधारकविप्रस्तु दशाहं सूतकी भवेदिति" माधवधृतवचने नामधारकविप्रस्यापि दशाहाशौचविधानात्" नि० सि०। दासाद्यशौचे विशेषः तत्र दासाः पञ्चदशधा दासशब्दे वक्ष्यमाणास्तेषु गर्भदासस्य सपिण्डान्तरजननमरणयोः स्वामिकार्य्ये सद्यः शौचं भक्तदासस्य त्र्यहः "सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः" नि० सि० स्मृत्युक्तेः कर्म्मकरदासानां विशेषः "मूल्यैः कर्म्मकराः शूद्रा दासीदासास्तथैव च। स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः" शाता० उक्तः। दत्तदासदास्यादीनां तु, "दासी दासश्च सर्व्वो वै यस्य वर्णस्य यो भवेत्। तद्वर्णस्य भवेच्छौचं दास्या मासन्तु सूतकम्" अङ्गि० "स्वामिशौचेन दासाद्याः स्पृश्याः मासात्तु कर्म्मसु। योग्याः स्युर्मासतोदासी सूतके स्पृश्यतामियात्" षट्त्रि०। दत्तदासादीनां सपिण्डमरणादौ स्वाम्यशौचसमसंख्यकदिनादूर्द्ध्वम् अत्यपि मासाद्यशौचे स्वामिकार्य्ये स्पृश्यतेति हरदत्तः एवमन्तेवासिनामपि। "दासान्तेवासिभृतकाः शिष्याश्चैकत्रवासिनः। स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके" वृह० उक्तेः। दासादेः स्वामितत्सपिण्डमरणेऽशौचमाह विष्णुः "पत्नीनां दासानामानुलोम्ये स्वामितुल्यमशौचं मृते स्वामिन्यात्मीयम्" अत्रानुलोम्येनेत्युक्तेः प्रातिलोम्येऽशौचाभाव एव तस्य शास्त्रीयदासत्वाभावात् "वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः" इति याज्ञ० स्मृत्या प्रातिलोम्येन दासत्वनिषेधात्। "सूतकानां परिच्छेद इत्यादि सू० सि० प्रागुक्तवचनात् सावनदिनस्यैव ग्राह्यता। मिताक्षराकृता तु रात्रिं त्रिभागां कृत्वाद्यभागद्वये चेत् पूर्व्वदिनम्, अन्त्ये चेत् परदिनमिति आरम्भकाले विशेष उक्तः। प्रागर्द्धरात्रात् प्राग्वा सूर्य्योदयात् पूर्व्वदिनमिति मतान्तरम्। एतेषु देशाचारतो व्यवस्था। अशौच्यन्नभक्षणेऽपि तत्तुल्य-

मशौचम् । "अथ ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचम् यावत्तेषाम्" विष्णुः एतत् ज्ञानतः, अज्ञाने तु "अन्तर्दशाहे भुक्तान्नं सूतके सूतकेऽपि वा तस्याशौचं भवेत्तावद्यावदन्नं व्रजत्यधः" अङ्गिरसोक्तं ज्ञेयम् "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते" इति यमः । उभयत्र जननमरणयोः दशाहानीत्यशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य सम्बन्ध्यन्नमसकुल्यैर्नैभोक्तव्यम् । सकुल्यानां न पुनर्दोषः "सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्" इति तेनैवोक्तत्वात् अयञ्च निषेधो दातृभोक्त्रोरन्यतरेण जननमरणे ज्ञाते सति द्रष्टव्यः । "उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेदिति षट्त्रिंशन्मतदर्शनात् । तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । "विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्त्तित" इति बृहस्पतिस्मरणात् तथाऽपरोऽपि विशेषः षड्विंशन्मते दर्शितः । "विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके । परैरन्नं प्रदातव्यम्भोक्तव्यञ्च द्विजोत्तमैः । भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः" नि० सि० इति । तथाऽशौचिपरिग्रहत्वेऽपि केषु चित् द्रव्येषु दोषाभावः । यथाह मरीचिः । "लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च । तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके" इति । शाकम्भक्ष्यजातम् । अपक्वन्तण्डुलादि । स्वयंग्रह इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयात् न तद्धस्तात् । एतदप्यामान्नविषयं सत्रप्रवृत्तविषयञ्च । "अन्नसत्रप्रवृत्तानामामन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषान्त्रिरात्रन्तु पयः पिबेदिति" अङ्गिरः स्मरणात् । अत्र पक्वशब्दोऽभक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे त्वङ्गिरसा विशेष उक्तः । "अशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्यैव लुप्यन्ते गृह्याणाञ्च न तद्भवेदिति" । तदशौचङ्केवलं गृहमेधिन एव न पुनस्तद्गृहवासिनां भार्यादीनान्तद्द्रव्याणाञ्च भवेदित्यर्थः । एवमेवातिक्रान्ताशौचेऽपि । "संसर्गाद्यस्य चाशौचं यस्यातिक्रान्तकालता । तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित्" षट्त्रिं० नि० सि० । कर्म्मविशेषे कर्म्मारम्भे च तत्तत्कर्म्मणि अशौचाभावः यथोक्तम् । "कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः" प्रचेतसा, । लघुविष्णुना च "व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । प्रारम्भोवरणं यज्ञे संकल्पो व्रतबन्धयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया" वरणमिति ऋत्विक्परम् तेषाञ्च मधुपर्कग्रहणोत्तरमशौचाभावः । "गृहीतमधुमर्कास्तु यजमानात्तु ऋत्विजः । पश्चादशौचं पतितं न भवेदिति निश्चयः" ब्रह्मपुरा० उक्तेः एतन्मूलकमेव त्रिंशच्छ्लोक्यां तत्तत्कार्य्येषु अशौचाभाववचनम् यथा "तत्तत्कार्य्येषु सत्रिव्रतिन्धपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पप्रातुराणाम् । संप्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूड़ातीर्थाङ्गयात्राजपपरिणयनाद्युत्सवेष्वेतदेव" "तीर्थेति आकस्मिकतीर्थप्राप्तौ तदङ्गं श्राद्धमशौचे कर्त्तव्यम् "विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत् कर्म्म यज्ञादि कारयेत्" पैठी० उक्तेः यात्रा रथयात्रादि । जपः पुरश्चरणादि संकल्पितस्तोत्रपाठादिश्च । व्रती संकल्पेन गृहीतव्रतादिः "गृहीतनियमस्यापि न स्यादन्यस्य कस्यचिदिति" ब्राह्मोक्तेः "वरं प्राणान् परित्यज्य मुण्डनं शिरसोऽपि वा नत्वनभ्यर्च्य भोक्तव्यं भगवन्तं त्रिलोचनम्" इत्युक्तनियमवतो देवपूजायामधिकारः । कृतनियमविषया "शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः । श्रौतकर्म्माणि कुर्व्वीत स्नातः शुद्धिमवाप्नुयात्" यमोक्तिः "जपो देवार्चनविधिः कार्य्योदीक्षान्वितैर्नरैः नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्" मुक्तावली च । "अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् । स्नात्वा निर्वर्त्य नित्यञ्च मानस्या क्रियया हि वै । बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्" शारदा । मानसजपे तु अकृतनियमस्यापि अशुचेरप्यधिकारः "अशुचिर्वा शुचिर्वापि गच्छन् तिष्ठंस्तथा स्वपन् । मन्त्रैकशरणोविद्वान् मनसैव समभ्यसेत् "रामार्चनचन्द्रिकोक्तेः "मानसमप्यशुचीति" वचनं तु पठनपाठनाविषयम् । तारादिविषये तु अकृतनियमस्याप्यधिकारः "तारायाश्चैव काल्याश्च त्रिपुराया विशेषतः । जनने मरणे चैव न त्यजेयुर्जपार्चनम्" इति तन्त्रोक्तेः । अथाशौचे नियमाः नि० सि० याज्ञवल्क्यः "इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः । आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् । प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः" । "प्रवेशनादिकं

कर्म प्रेतसंस्पर्शिनामपि” नि०सि०। “क्रीतलब्धाशनाभूमौ स्वपेयुस्ते पृथक्क्षितौ या० इदञ्चाद्येऽह्नि। यथाशुद्धितत्त्वे वैजवापः “शमीमालभन्ते ‘शमी मे पापं शमयत्विति” अश्मानमालभन्ते “अश्मेव स्थिरोभूयासमिति” अग्निम् “अग्निर्नःशर्म यच्छत्विति” ज्योगित्यन्तरा गामजमुपस्पृशन्तः क्रीत्वा लब्ध्वावान्यगेहादेकान्नमलवणमेकरात्रं दिवाभोक्तव्यं ‘त्रिरात्रं’ च कर्म्मोपरमणम्” क्रीताद्यशनमुपवासाशक्तस्य। आश्वलायनस्तु “नैतस्यां रात्र्यामन्नं पचेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं चेत्याह महागुरुषु”। अशक्तौ रत्नाकरे आपस्तम्बः “भार्य्याः परमगुरुसंस्थायां चाकालभोजनानि कुर्वीरन्” यदा क्षतिः परदिने तावत्कालमित्यर्थः। बृहस्पतिः “अधःशय्यासना दीना मलिना भोगवर्जिताः। अक्षारलवणान्नाः स्युर्भैक्ष क्रीताशनास्तथा” अक्षारलवणशब्देऽक्षारलवणशब्दार्थ उक्तः। भोगोऽभ्यङ्गताम्बूलादिः “तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनञ्च यत्। तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः मार्क०पुरा० वाक्यन्तु अन्त्यदिनविषयम् “अशौचान्ते तिलकल्कैः स्नाता गृहं प्रविशेयुरिति विष्णूक्तेः सपिण्डानामस्थिसञ्चयनादूर्द्ध्वं भोगोऽप्युक्तः विष्णु०पु०। “शय्यासनोपभोगस्तु सपिण्डानामपीष्यते अस्थिसञ्चयनादूर्द्ध्वं संयोगस्तु न योषिताम्” तिलान् ददत पानीयं दीपं ददत जाग्रतः। ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतेषु दुर्लभम्” भारतम्। भोजनं च दिवैव। दिवा चैव च भोक्तव्यममांसं मनुजर्षभेत्यतोः प्रागुक्तवैजवापोक्तेश्च। “क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुः” पारस्करोक्तेश्च अशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्” आदि पुरा० ज्ञातिभिः सह भोजनञ्च तृतीयादिदिनपरम्। प्रथमेऽह्नि तृतीये च सप्तमे दशमे तथा। ज्ञातिभिः सह भोक्तव्यमिति” मरीच्युक्तेः। “मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ” मनुः। लवणक्षीरमाषान्नापूपमांसानि पायसम्। वर्ज्जयेदाहृतान्नेषु बालवृद्धातुरैर्विना” देवजानीयकारि० “मत्स्यमांसानि न भक्षयेयुरा प्रदानात्” गौत० “अधस्तरे त्र्यहमनश्नन्त आसीरन्” वसिष्ठः अशौचे पीठादिनिषेधात् अधःकाले उपवेशार्थं कटस्तरः कार्य्यः “पाणिषु मृण्मयेषु पर्णपुटेषु वाऽश्नीरन्” हारीतः। “उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य चैवहि” मरीचिः। अन्त्यदिने विशेषः “यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः। स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि। ग्रामाद्बहिस्ततोगत्वा प्रेतस्पृष्टे तु वाससी। अन्त्यानामाश्रितानाञ्च त्यक्त्वा स्नानं करोत्यथ” ब्राह्मम् अत्र तिलकल्कादिस्नानं प्रागुक्तम्। अशौचाहेषु सर्व्वदिनेषु वर्ज्जनीयधर्म्मान्तरमाह शङ्खः “दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रियावर्ज्जमशौचे विनिवर्त्तते” अत्र विशेषोमिताक्षरायाम् “अशुचित्वेन सकलश्रौतस्मार्त्तकर्म्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञानार्थमाह। “वैतानौपासनाः कार्य्याः क्रियाश्च श्रुतिचोदनात्” या०। वितानोऽग्नीनां विस्तारः तत्र भवावैताना स्त्रेताग्निसाध्याः अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते। प्रतिदिनमुपास्यत इत्युपासनो गृह्योऽग्निस्तत्रभवाः औपासनाः सायम्प्रातर्होमक्रिया उच्यन्ते। ता वैतानोपासना वैदिक्यः क्रियाः कार्य्याः कथं वैदिकत्वमिति चेत् श्रुतिचोदनात्। तथाहि। “यावज्जीवमग्निहोत्रञ्जुहुयात्” इत्यादि श्रुतिभिरग्निहोत्रादीनां चोदना स्मृतैव। तथा “अहरहः स्वाहां कुर्य्यादन्नाऽभावे केनचिदा काष्ठादिति” श्रुत्यौपासनहोमोऽपि चोद्यते। अत्र च श्रौतत्वविशेषणोपादानात् स्मार्त्तक्रियाणां दानादीनामननुष्ठानङ्गम्यते। अतएव वैयाघ्रपादेनोक्तम्। “स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्म्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति”। श्रौतानाञ्च कार्य्यत्वाभिधानान्नित्यनैमित्तिकानां करणम्। यथाह पैठीनसिः। “नित्यानि निवर्त्तेरन्वैतानवर्ज्जं शालाग्नौ चैक” इति। नित्यानि निवर्त्तेरन् इत्यविशेषेणावश्यकानां नित्यनैमित्तिकानान्निवृत्तौ प्रसक्तायां वैतानवर्ज्जमित्यग्नित्रयसाध्यावश्यकानाम्पर्य्युदासः। शालाग्नौ चैक इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्य्युदास उक्तः। अतस्तेष्वशौचं नास्त्येव। काम्यानां पुनःशौचाभावादननुष्ठानम्। मनुनाप्यनेनैवाभिप्रायेणोक्तम्। “प्रत्यूहेन्नाग्निषु क्रिया” इति। अग्निषु क्रिया न प्रत्यूहेदित्यनग्निसाध्यानाम्पञ्चमहायज्ञादीनान्निवृत्तिः। अत एव संवर्त्तः। “होमन्तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा। पञ्चयज्ञविधानन्तु न कुर्य्यान् मृत्युजन्मनोरिति”। वैश्वदेवस्य अग्निसाध्यत्वेऽपि वचनान्निवृत्तिः “विप्रोदशाहमासीत वैश्वदेवविवर्ज्जितः” इति तेनैवोक्तत्वात्। “सूतके कर्मणान्त्यागः सन्ध्यादीनां विधीयत” इतियद्यपि सन्ध्याया निवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकङ्कार्य्यम्। “सूतके सावित्र्या चाञ्जलिम्प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यादिति” पैठिनसिस्मरणात्। यद्यपि वैतानौपासनाःकार्य्या इति सामान्येनोक्तं तथाप्यन्येन कारयितव्यम्। “अन्य एतानि कुर्य्युरिति” पैठीनसिस्मर-

णात् । बृहस्पतिनाप्युक्तम् । "सूतके मृतके चैव अशक्तौ श्रा-
द्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्" इति ।
तथा स्मार्त्तत्वेऽपि पिण्डपितृयज्ञश्रावणीकर्म्माश्वयुज्यादिकस्य
नित्यो होमः कार्य्य एव । "सूतके तु समुत्पन्ने स्मार्त्तङ्कर्म्म-
कथम्भवेत् ? । पिण्डयज्ञं चरुं होममसगोत्रेण कारये-
दिति" जातूकर्ण्यस्मरणात् । यद्यपि साङ्गे कर्म्मण्यकर्त्तृत्व-
न्तथापि स्वद्रव्यत्यागात्मकप्रधानं स्वयङ्कुर्य्यात् तस्या-
नन्यनिष्पाद्यत्वात् । अतएवोक्तम् । "श्रौते कर्म्मणि तत्कालं
स्नातः शुद्धिमवाप्नुयादिति" । यत्पुनः "दानम्प्रतिग्रहो होमः
स्वाध्यायश्च निवर्त्तते" इति होमप्रतिषेधः । स काम्याभि-
प्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः" इत्यन्तेन ।
संध्यादौ नामप्यपवादमाहापरार्के पुलस्त्यः "संध्यामिष्टिं चरुं
होमं यावज्जीवं समाचरेत् । न त्यजेत् सूतके वापि त्यजन्
गच्छेदधो द्विजः । सूतके मृतके चैव संध्याकर्म्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः" १ यत्तु चन्द्रिका-
यां जावालः "सन्ध्यां पञ्च महायज्ञान्नैत्यिकं स्मृतिकर्म्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियेति" यच्च संवर्त्तः
"सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते" यच्च विष्णु०
पुरा० "सर्व्वकालमुपास्या तु सन्ध्ययोः पार्थिवेष्यते । अन्यत्र
सूतकाशौचविभ्रमातुरभीतितः" इति तत् संपूर्णसन्ध्यापरम्
"अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जितेति" शुद्धिदीपे
च्यवनोक्तेः पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह "सूतके सावि-
त्र्याञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्य्यात्" प्रयोगपरिजाते
भरद्वाजोपि "सूतके मृतके कुर्य्यात् प्राणायाममनन्त्रकम् । त-
था मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत् । गायत्रीं सम्यगु-
च्चार्य्य सूर्य्यायार्घ्यं निवेदयेत् । मार्ज्जनं तु न वा कार्य्यमुपस्थानं
न चैव हि" एवं मिताक्षरापरिजातादौ अशौचे सन्ध्या-
करणभेदस्योक्तेः गौड़ानां तदनाचरणमनाचार एव तस्य
श्रौतत्वेन स्मृत्या बाधानुचितत्वादिति द्रष्टव्यम् ।
"ग्रहणादावप्यशौचापवादमाह व्याघ्रः "स्नातकर्म्मपरि-
त्यागो राहोरन्यत्र सूतके इति" लैङ्गे "सूतके मृतके
चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न
दृश्यते" प्रयोगपारिजाते "बृहस्पतिः "कन्याविवाहसंक्रान्तौ
सूतकं न कदाचन" । महागुरुनिपातवर्षमध्ये कर्म्मविशेषेऽ-
शौचम् । "स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम् ।
प्रथमाब्दे न कुर्व्वीत महागुरुनिपातने" हेमा० स्मृतिः ।
महागुरवस्तु माता पिता भर्त्ता च अतिगुरुशब्देनोक्ताः । "प्रमी-
तौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् । नापि दैवं न वा पैत्रं या-
वत् पूर्णो न वत्सरः" देवी पु० अग्नितर्पणं लक्षहोमादि, न
त्वाधानं तस्य प्रथमाब्देऽपि विधानात् यथा "पितुः सपिण्डी
करणं वार्षिकं मृतवासरे । आधानाद्युपसंप्राप्तावेतत्
प्रागपि वत्सरात्" हेमा० उश० । अग्नितर्पणमित्यत्र अ-
न्यतर्पणमिति शुद्धितत्त्वे पाठः । आधानादीत्यादिपदेन आ-
वश्यक वृद्धिनिमित्तनित्यकर्म्मणोर्ग्रहणम् । श्राद्धकौमुद्यां देवी
पु० "महातीर्थस्य गमनमुपवासव्रतानि च । संवत्सरे न कुर्व्वीत
महागुरुनिपातने" एतदेकवाक्यतया प्रागुक्तवचने स्नानपदं
काम्यतीर्थादिस्नानपरम् महादानसाहचर्य्यात् स्वाध्यायपद-
मपि काम्यवेदपारायणपरम् "तथैव काम्यं यत् कर्म्म वत्-
सरात् प्रथमादृते" लघुहा० वचनैकवाक्यत्वात् "महागुरु
निपाते तु काम्यं किञ्चित् न चाचरेत् । आर्त्विज्यं
ब्रह्मचर्य्यं च श्राद्धं दैवयुतञ्च यत्" कालि० पु० "सपिण्डी
करणादूर्द्ध्वं प्रेतः पार्व्वणभुग्भवेत् । वृद्धीष्टापूर्त्तयोग्यश्च गृ-
हस्थश्च सदा भवेत्" मत्स्य पु० । वृद्धीत्यनेन वृद्धिनिमित्तक
सपिण्डनाभावे नाधिकारीत्यर्थः गृहस्थश्च सदा भवेदित्यनेन
गृहस्थोचितनित्यपञ्चयज्ञेष्वधिकारः । अतएव पितृमरणा-
शौचोत्तरमेव वैश्वदेवश्राद्धं विहितम् । एवं वृद्धिश्राद्धाभावे
वर्षपर्य्यन्तं तत्तत्कर्म्मण्यशौचमिति स्थिते "प्रेतकर्म्माण्य-
निवर्त्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थं ततः पुंसि पञ्चमे
शुभदं भवेदिति" ज्योतिषवाक्यं शुभदमित्युक्त्या शुद्धर्थ्यच-
तुर्थोर्द्ध्वकर्त्तव्यश्राद्धोत्तरं प्राशस्त्यमात्रपरमेव । एतच्चाशौचं
वर्षमध्ये आवश्यकवृद्ध्यर्थसपिण्डनाभावएव । "अर्व्वाक् संवत्-
सरात् वृद्धौ पूर्णे संवत्सरेऽपि वा" इत्यादि स्मृत्यनुसारेण
आवश्यकवृद्धिनिमित्तसपिण्डापकर्षे तु काम्यादिकर्म्मकरण-
योग्यता । अत्र विशेषमाह लौगाक्षिः । "अन्येषां प्रेतकर्म्माणि
महागुरुनिपातने । कुर्य्यात् संवत्सरादर्व्वाक् श्राद्धमेकं तु व-
र्ज्जयेत्" प्रेतकर्म्म दाहाद्येकादशाहान्तं तत्राशौचान्तरस्या-
प्रतिबन्धकत्वात् "आद्यं श्राद्धमशुद्धोऽपि कुर्य्यादेकादशेऽह-
नीति निर्ण० सि० धृतस्मृतेः । तेन एकं सपिण्डनं वार्षि-
कादि च । एवं देवी० पु० वचनेऽपि पैत्रपदं पार्व्वणसपिण्डन-
वार्षिकपरम् । अत्रापवादः माधवीये ऋष्य० "पत्न्याः पुत्रस्य
तत्पुत्रभ्रात्रोस्तत्तनयेषु च । स्नुषायाश्चैव पित्रोश्च संघातमरणं
यदि । अर्व्वागब्दान्मातृपितृपूर्व्वं सपिण्डमाचरेत्" लौगा०
"पत्नीपुत्रस्तथा पौत्रो भ्राता तत्पुत्रकाअपि । पितरौ च
यद्येकस्मिन् म्रियेरन् वासरे तदा । आद्यमेकादशे कुर्य्यात्
त्रिपक्षे तु सपिण्डनम्" इदम् एकदिनमरणविषयमेव
"महागुरुनिपाते तु प्रेतकार्य्यं यथाविधि । कुर्य्यात् संवत्-

सरादर्व्वागेकोद्दिष्टं न पार्व्वणम्” इति धवलनिबन्ध-
वाक्यात् । “माता चैव तथा भ्राता भार्य्या पुत्रस्तथा स्नुषा ।
एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः”इति भृगुवचनं
भिन्नदिनमरणेऽपि पितुर्म्मृतावन्यस्य सपिण्डनं न कार्य्यमेषा-
मेव कार्य्यमित्येतत्परमिति नि०सि०। “पितर्य्युपरते पुत्रो-
मातुः श्राद्धान्निवर्त्तते । मातर्य्यपि च वृत्तायां पितृश्राद्धा-
द्वते समाम्” माध० वृह० वचनन्तु वार्षिकश्राद्धपरम्
मातुः कृते इत्याकर्ष्य मातरं पितरं च विना अन्यस्य-
श्राद्धात् वार्षिकश्राद्धात् समां व्याप्य निवर्त्तते इत्यर्थः ।
“अन्यश्राद्धं परान्नञ्च गन्धमाल्यञ्च मैथुनम् । वर्ज्जयेद्गुरु-
पाते तु यावत् पूर्णो न वत्सरः” देवलवचने अन्यपदं
भृगुवचनोक्तमात्रादिभिन्नपरम् । अन्नपदञ्च सिद्धान्नपरं “भि-
स्सोऽस्त्री भक्तमन्धोऽन्नमित्यमरोक्तेः “सिद्धमन्नमुदाहृतम्”
इत्युक्तेश्च न तु परस्वामिकामान्नमात्रपरम् अन्नशब्देन रूढ्या
परिभाषया च सिद्धान्नस्यैव झटित्युपस्थापकत्वात्
आमान्नस्य लक्ष्यार्थतया विलम्बेनोपस्थितेश्च । एवमे-
वाचारः “विशेषतः शिवापूजां प्रमीतपितृको
नरः । यावत् वत्सरपर्य्यन्तं मनसाऽपि न चिन्तयेत्”
कालिकापु० वाक्यं वार्षिकदुर्गापूजाविषयं नित्यपूजायाः
कर्त्तव्यतायाः दशाहमध्येऽपि प्रागुक्तेः । “द्वयोरेव
महागुर्व्वोरब्दमेकमशौचकम् । नान्येषामधिकाशौचं स्व-
जातिविहितात् क्वचिदिति” श्राद्धकौ०धृतजातू० वचनं तु पुरु-
षविषयम् । स्त्रीणां भर्त्तुर्म्महागुरुतायाः सर्व्वसम्मतत्वेन
तन्मरणे अधिकाशौचस्योचितत्वात् अतएव “महागुरुविप-
त्तिषु इत्यादिना सामान्यतो बहुवचनमुपात्तम्। “गयाश्राद्धं
मृतानां तु पूर्णे त्वब्दे प्रशस्यते” हेमा०भवि०पु० । तीर्थ-
श्राद्धं गयाश्राद्धम् श्राद्धमन्यच्च पैतृकम् । अब्दमध्ये
न कुर्वीत महागुरुविपत्तिषु त्रिस्थ० गरु० पु० ।
इदं वृद्ध्यर्थसपिण्डनाभावे । वृद्धौ सपिण्डनापकर्षे तु
वर्षमध्येऽपि दर्शादिकं कार्य्यमेव “पितुः सपिण्डनं कृत्वा
कुर्य्यान्मासानुमासिकम्” छन्दोगप०वचनात् “सपिण्डी-
करणादूर्द्ध्वं नरः पार्व्वणभुग्भवेत्” मात्स्यात् “ततः
प्रभृति वै प्रेतः पितृसामान्यमश्नुते । विन्दते पितृलोकं
च ततः श्राद्धं प्रवर्त्तते” इति हारीतवचनाच्चेति शूल-
पाणिः । “उद्वाहश्चोपनयनं प्रथमेऽब्दे महीपते ! ।
कृते सपिण्डनेऽप्यूर्द्ध्वमस्थूनां चोद्धरणं त्यजेत् । तथापि
कर्त्तुमिच्छन्ति लौल्ये चैतानि वै सुताः । मासिकान्य
वशिष्टानि चापकृष्य चरेत् पुनः” ब्रह्म वै०पु० । अत्रेदं
बोध्यं वृद्धिं विना कुलधर्म्मैकपुत्रत्वादिवशतः वर्षमध्ये
सपिण्डनापकर्षेऽपि पितृत्वप्राप्तिर्वर्षान्तएव “कृते
सपिण्डीकरणे नरः संवत्सरात् परम् । प्रेतदेहं परि-
त्यज्य भोगदेहं प्रपद्यते” विष्णु ध०उक्तेः “अर्वाक् संवत्-
सराद्यस्य सपिण्डीकरणं भवेत् । प्रेतत्वमपि तस्यापि विज्ञेयं
वत्सरं नृप !” इत्यग्निपु०उक्तेश्च। तेन एतद्विषये महागुरूणां
प्रेतत्वसत्त्वेन विवाहोपनयनादौ दैवपैत्रेषु च नाधिकारः
वृद्धिनिमित्ते सपिण्डने संवत्सरमप्राप्यापि प्रेतत्वविमु-
क्तित्वेन सर्व्वत्राधिकारः । “अर्वाक् संवत्सराद्वृद्धौ पूर्णे
संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषां च
पृथक्क्रिया” शाता० वाक्ये पूर्णवत्सरस्येव वृद्ध्यारम्भ
कालस्यापि प्रेतत्वविमोचनहेतुत्वोक्तेः तथात्वम् । यतः
सपिण्डीकृता अतो न प्रेताः प्रेतपदप्रतिपाद्या विमुक्त
प्रेतभावा इत्यर्थः । तत्र विशेषः । “अस्थिक्षेपं गयाश्राद्धं श्राद्धं
चापरपाक्षिकम् । प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्
सुतः” मदनपारिजातधृतवचनम् । “भक्तिमान् भक्त्या स्व-
श्राद्धकारीति मदनपारिजातादयः । “भक्तिश्राद्धं तु त्रिस्थली-
सेतौ उक्तम् तच्च गयाश्राद्धादिपद्धतौ अस्माभिर्दर्शितं तत-
एवावगन्तव्यम् । एवं व्रताशौचमपि कर्म्म विशेषानर्हत्वप्रयो-
जकम् । विवरणं व्रताशौचशब्दे” ग्रहणेऽशौचं ग्रहण-
शब्दे वक्ष्यते । रजस्वलाशौचन्तु अशुद्धिशब्दे उक्तप्रायम् ।
“अपाटवाद्यशौचाद्यैर्यदि विघ्नं प्रजायते । तदशौचे व्य-
तीते तु तेषां श्राद्धं विधीयते” तिथि०त० स्मृतिः ।

**अशौचसङ्कर** अशौचयोः सङ्करः । जननमरणाशौचयो
र्मध्ये पुनर्जननामरणाशौचयोः पातेन जनिते अशौच-
विशेषे । तत्कालभेदो यथा जननाशौचमध्ये जनना-
शौचान्तरपाते पूर्व्वाशौचकालेन शुद्धिः । पूर्णाशौ-
चान्त्यदिने पूर्णाशौचान्तरपाते अन्तिमदिनोत्तरदिनद्वयेन
शुद्धिः । अन्तिमदिवसोत्तरप्रभाते सूर्य्योदयात् पूर्व्वं तत्-
पाते सूर्य्योदयावधिदिनत्रयेण शुद्धिः । एवं मरणाशौचेऽपि ।
वर्द्धितदिनद्वयत्रयाभ्यन्तरे अशौचान्तरपाते पूर्व्वेणैव
शुद्धिः। अशौचत्रितयान्तत्वमेकदैव । तद्द्वितीयदिनकृत्यं
तत्परदिने । अत्र दशमदिनतत्प्रभातयोः पितृमातृभर्त्तृ
मरणे तु न दिनद्वयत्रयाच्छुद्धिः किन्तु स्वावधेरेव सम्पूर्णा-
शौचमिति । ज्ञातिजननाशौचमध्ये स्वपुत्रजनने पूर्व्वार्द्धे
पूर्व्वेण, परार्द्धे परेण शुद्धिः । एवं ज्ञातिमरणमध्ये पितृमा-
तृभर्त्तृमरणे पूर्व्वार्द्धे पूर्व्वाशौचकालेन, परार्द्धे पित्राद्यशौच-
कालेन शुद्धिः। स्वपुत्त्रजननाशौचान्तिमदिनतत्प्रभातयोर्ज्ञाति-

जनने, पितृमातृभर्त्तृमरणाशौचान्तिमदिनतत्प्रभातयोर्ज्ञातिमरणेऽपि न दिनद्वयत्रयवृद्धिः । स्वपुत्त्रयोस्तु तथा जनने मातापित्रोस्तु तथा मरणे न दिनद्वयत्रयवृद्धिः । जननाशौचयोस्तु सन्निपाते पूर्व्वार्द्धे जातोयदाऽशौचाभ्यन्तरे मृतस्तदा सपिण्डानां सद्यः शौचेन पूर्व्वाशौचस्य नाशः । तन्नाशादेव परार्द्धजातमातापितृव्यतिरिक्तानां परजननाशौचस्य निवृत्तिः । परजातमरणे तु न तथा तस्य पूर्वजननावधिस्थायित्वादिति गुरुचरणाः । एवं द्वितीयजातस्य पित्रोस्तु पूर्व्वार्द्धजातमरणे पूर्व्वाशौचकालावधि अङ्गास्पृश्यत्वयुक्तमशौचं, परार्द्धजातमरणे तु स्वावधिजननाशौचमङ्गास्पृश्यत्वयुक्तमिति । औत्सर्गिकसमसंख्यदिवसीयजननमरणाशौचयोः सन्निपाते मरणाशौचकालेन शुद्धिः । तदन्यकालयोस्तु दीर्घकालाशौचकालेन शुद्धिः । ततश्च पुत्त्रवत्याविंशतिरात्राशौचान्त्यदिने पत्युर्मरणे बहुकालेन जननाशौचकालेन शुद्धिः तथा सपिण्डद्वयजननजातद्वादशाहान्त्यदिने पितृमातृभर्त्तृमरणेऽपि बहुकालीनाशौचकालेन शुद्धिः । प्रथमदिने सपिण्डमरणद्वये यावदशौचं सर्वगोत्रास्पृश्यत्वयुक्तम् एवं प्रथमाह्ने सकुल्यद्वयमरणेऽङ्गास्पृश्यत्वयुक्तं त्रिरात्रम् । तेनैतत् त्रिरात्रं गुरु विदेशमरणादौ त्रिरात्रं तु लघु स्नानेनैवाङ्गास्पृश्यत्वनिवृत्तेः । ततश्चोभयोः सन्निपाते गुरुणैव शुद्धिः । एवं विदेशस्थमृतज्ञातित्रिरात्राद्विदेशस्थमृतपितृमातृभर्त्तृत्रिरात्रं गुरु । संपूर्णाशौचे तु अशक्तानामपि यावदशौचमक्षारलवणाशित्वदर्शनात् । अत्रापि तावत्कालं तथाविद्धत्वात्तत्रापि गुरुणैव शुद्धिः । तुल्यत्रिरात्रयोस्तु सन्निपाते पूर्व्वेणैव शुद्धिः । तथा कन्यापुत्त्रयमजोत्पत्तौ मातुर्मासेन शुद्धिः । तयोरशौचमध्ये मातुः कन्यामरणे सद्यः शुद्धिर्न पुत्त्रमरणात्, अन्येषान्तु प्रथमजातमरणात् शुद्धिः । न परजातमरणात् एवमन्यद्भाव्यं सुधीभिः" शुद्धितत्त्वम् ।

**अशौचान्त** पु० अशौचस्यान्तोयत्र । स्वजात्युक्ताशौचावसानाधारे दशमादौ दिने "अशौचान्ताद् द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्" । "अशौचान्ताद्द्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः" इति च स्मृतिः । [२तच्छून्ये त्रि० ।

**अशौर्य्य** न० अभावे न० त० । १शौर्य्याभावे अपराक्रमे न० ब० ।

**अश्न** त्रि० अश्नुते व्याप्नोति अश्नाति वा अश–नन् । १व्यापनशीले २भोजनशीले च "मृगोनाश्नो अति यज्जुगुर्य्यात्" ऋ० १।१७३।२ "अश्नोव्यापकः अशनशीलश्च" भा० "कर्म्मणि नन् । ३व्याप्ते "तस्य भ्राता मध्यमो अस्त्यश्नः" ऋ० १।१६४।१। "अश्नः व्याप्तः भा० ४असुरभेदे पु० सुष्वाणुषसः सूर्य्येण स्तवानश्नस्य" ऋ० २।२०।५। "अश्नुते स्वतेजसा सर्वं जगदित्यश्नः कश्चिदसुरः भा० । "अध्वर्य्यवोयः स्वश्नं जघान" ऋ० २।१४।५।५। करणे नन् । सोमकण्डनप्रस्तरे । "नृभिर्धूतः सुतोअश्नैरव्यो वारैः" ऋ० ८।२।२। अश्नैः अश्मभिः करणभूतैः सुतोऽध्वर्य्युभिरभिषुतः" भा० । अश्नुतेऽम्बरम् । ६मेघे निरु० ।

**अश्नीतपिबता** स्त्री अश्नीत पिबत इत्युच्यते यस्यां निदेशक्रियायाम् मयू० स० । भोजनादिनिदेशक्रियायाम् "अश्नीतपिबतीयन्ती प्रसृता स्मरकर्म्मणि" भट्टिः ।

**अश्मक** पु० अश्मेव स्थिरः निश्चलत्वात् इवार्थे कन् । १ऋषिभेदे "वेदस्यानेन वात्स्येन तथाश्मकसुमन्तुना" भा० शा० प० । २दक्षिणदेशस्थे देशभेदे । "गन्तव्योमलयः श्रीमान् पर्व्वतो धातुमण्डित" इत्युपक्रम्य "तथाश्मका पुलिन्दाश्च कलिङ्गाश्च विशेषतः" रा० कि० का० । वृहत्संहितायान्तु स देशः पश्चिमोत्तरस्यां दिशि । "दिशि पश्चिमोत्तरस्यां माण्डव्यतुषारतालहलमद्राः । अश्मककुलूतलहडस्त्रीराज्यसिंहवनखण्डाः" इति कूर्म्मविभागे उक्तम्" अतउभयत्रापि तन्नामको देशः । तस्य जनपदवाचित्वात् तद्देशवासिषु तद्राजनि च ततः कृताणो बहुषु लुक् । ३तद्देशवासिनि ४तद्राजनि च ब० व० । "साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" पा० सू० साल्वजनपदावयवत्वेनोक्तेः ५साल्वदेशावयवे च साल्वदेशश्च वृह० सं० कूर्म्मविभागे नवसु खण्डेषु मध्यखण्डे उक्तः "भारतवर्षे मध्यात् प्रागादि विभाजिता देशाः मद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसंख्याताः" इत्युपक्रम्य "गजाह्वयश्चेति मध्यमिदम्" इति नवखण्डे कूर्म्मभागे मध्यखण्डे तस्य स्थितिरुक्ता अतः साल्वावयवनामकोऽश्मकः तदीयदक्षिणप्रदेशस्थः इति गम्यते तेन रामायणवाक्यं तद्विषयकमिति न विरोधः । अश्मके साल्वावयवे भवः इञ् आश्मकिः । तद्देशभवे त्रि० तद्राजनि च बहुषु लुक् आश्मकाः साल्वावयवाश्मकवासिषु तद्राजसु च ब० व० । स्त्रियां न लुक् आश्मक्यः । साल्वशब्देऽस्य विवृतिः ।

**अश्मकदली** स्त्री अश्नुते अश–मनिन् कर्म्म० । काष्ठकदल्याम् ।

**अश्मकुट्ट** पु० अश्मनि प्रस्तरएव धान्यादिकं कुट्टयति कुट्ट–अण्–उप० स० । वानप्रस्थभेदे, तस्योदूखलादिशून्यत्वेन तण्डुलादेर्निस्तुषीकरणस्य तत्रैव विधानात्तथात्वम् । "अश्मकुट्टोभवेद्वापि दन्तोलूखलिकोऽपि वा" मनुः । खुल् ।

यताः शोभोदयाश्चहस्तिरूहाशैर्हस्तैर्हस्तिनो भवन्ति । महागिरिदशार्णविन्ध्याटवीरावतीनां मध्ये दशार्णं वनमभिख्यातमत्र दीर्घाङ्गुलिपुष्कराः पद्माभाः श्यामा वा दुर्ग्रहाः सुवृत्तजघनाग्राः सितसूक्ष्मविन्दुचिता-श्चूतफलतुल्यमदगन्धिनोविशालोत्सङ्गदन्ताः स्थूलह-स्ताश्चशिरःग्रीवा मध्वक्षाः स्वासनाःसत्ववन्तश्च । पारि-यात्रवैदिशब्रह्मावर्त्तनानामन्तर्मार्गेयकं वनमत्रोदग्राः शीघ्रदीर्घक्रमेणोपदिग्धाङ्गाः बलवन्तोऽभिजाताः सुप्र-माणाः मध्वक्षास्तदुत्वचः कचाचित्प्राया अल्पमेच-काहरिद्राभावाश्चखण्डच्छन्नाः सुहस्ताः स्निग्धरोमाणः स्थिराः शुभशरीराः करेणूनामधिपतयः स्वल्पतापाश्च । विपुलमहदच्छिखारम्योत्कलानां मध्ये कालिङ्गकं वन-मत्र कलविङ्काक्षाः सर्व्वश्वेताः स्थिरपदाः शीघ्राः मृदुखररोमाणस्तनुत्वगुदरादीर्घकेशबालधयो दीर्घ-क्रमाः बलवन्तोऽल्पमेचकाः पद्मप्रभा यातुरदग्रा धनुः-पृष्ठवंशारक्ततालुजिह्वौष्ठाः सुप्रयोगप्रहसुखाःवराहज-घनाः नीचवृत्तनखाःस्थिरचरणाः आशुसुवेदिनोमधुद-शनाः पीतसुरसर्वशिरोधराः महोरगवृहत्कराः मृदु-दीर्घहस्ताहस्तिनो भवन्ति । नर्म्मदोदधिसेवदेशान्तो-पहारणामन्तरतोऽपरान्तिकं वनमत्र मानिनो धीराः श्यामाःसम्प्रतिष्ठिताः हस्वजघनशिरोधरा पीनायतविषा-णाः सास्रका मृदुत्वच उदग्रादीर्घरक्तताल्वोष्ठजिह्वा-महोत्सङ्गाः पद्ममदगन्धिनो धनुःपृष्ठवंशाविष्टत्तास्रा-नाल्पवनविचारिणः । द्वारकार्बुदावर्त्तनर्मदान्तरतः सौ-राष्ट्रकं वनमत्राल्पायुषश्चण्डाः पिङ्गायताक्षाः मध्या-यताङ्ग्रयोऽल्पमेचका मृदुविभक्तमालाप्रतिलोमलोमशचर-रणास्तनुत्वक्कृर्णनखाः सूक्ष्मदन्ताः शिवात्मज इति । हिमवत्सिन्धुकुरुजाङ्गलकानामभ्यन्तरे वनं पञ्चनदाख्यं तत्र स्फुटितरूक्षश्वेतांशुदन्तास्तनुविन्दूपचितकराः सुगन्धयोमृदवोमहापेचकदेशाङ्गप्रमाणाःसूक्ष्मवृहत्त्वचोदु-र्विनेयाध्यानशीलाः कलत्वरुपो भवन्त्यपि । वनेषु तेषु जायन्ते प्रधानामध्यमोत्तमाः । प्रशस्ता निन्दिताश्चापि तेषां वक्ष्यामि लक्षणम् । नष्टजतुकाष्ठसङ्काशं सुसमल्पाङ्गु-ष्ठपुष्करं दुर्गन्धं कर्कशत्वग्रोमाणमाततलम्बस्थूलविरलप-र्वाणं हस्तिनो हस्तमध्यन्यविघातधन्यं पीतं मृदुरोमा-णमनुपूर्वपतितं चारुदीर्घाङ्गुलिपीनं पृथुपुष्करंमृदुवलि-तम् । सुगन्धिवृत्तं पञ्चहस्तायतं द्विरक्तं वृहत्स्फोतोपो-वकाशं च । कचस्फुटितासुसमलिनविषमचक्रखण्ड-सूक्ष्मदन्तावपूजितौ पूजितौ च स्निग्धलक्षणप्रदक्षिणोन्न-तामलिनसममाहितौ मधुसवर्णौ सुकुलिताग्रावाबाधमन्धा-यातावष्टादशाङ्गुलपरिणाहौ । अथ विरूपविषमे वराह-नकुलध्वाङ्क्षवानराभे रूक्षविच्छिन्नपक्षे सचिमीलिते लोचने न पूजिते पूजिते च कलविङ्काभसूर्य्यमणि-वह्नितुल्ये सनुपहिते च । प्रशस्तं समाहितमायतपृष्ठ-बाहित्यमवस्थितरक्ततालुजिह्वौष्ठचारुसूक्ष्मलक्षणविन्दूप-चितं सर्व्वसंपूर्णम् । मृदुमृदुनिर्याणपीडितपुष्करं विषममासनात् षडङ्गुलावागबन्धनाभावेन नतकुम्भल-म्बनेनातिरिक्तं प्रमाणं घण्टाधनपिङ्गं रूक्षास्थूलदन्त-रोमोपचितमपूजितं शिरोवारणानां पूजितं महो-दयस्थानसुपचितसक्रमनिम्नस्वरनिर्याणं पृथुपुष्करं स्नि-ग्धमृदुसूक्ष्मयुग्मरोमसुविभक्तोष्णीषविताणावपाहं वा सुखोत्कृष्टोपकृष्टौ वृत्तौ लम्बौ तनुविषमशिराततौ पीडितान्तावतिहस्वप्रमाणौ संहतच्छिद्रौ सान्द्रमृदुल-प्रमाणसिरालावपाठितपुटसंविपुलमूलिकौ, पृष्ठच्छिद्रौ दुन्दुभिस्वनौ वा । केशावहाच्छिद्रातिदीर्घानुपचित-पीड़िका सुसुहृतौ पृष्ठावलम्बनात्युन्नतायतास्थानावपीडिता शीवा वारणस्याप्रशस्ता शस्ता तु मस्तोपरि पिण्डिका दृढारणी त्रिवलि: साङ्गारत्निपरीणाहा द्वादशाङ्गुलायता सर्वसम्पूर्णा वा । विषममवाप्य संक्षिप्तलम्बं संपुटमा-नसं विगर्हितं स्थिरं च विनतमत्युन्नतं वक्रं पृष्ठवंशम-शोभनम् । शोभनसुपचितसूक्ष्मं धनुःप्रमाणमेव संस्थानं विद्यात् । अथ पूर्व्वगात्रच्छिद्रोन्नतांस विकलितहस्तयो-र्हस्तं शिरालम्बनं लम्बव्याधिहन्तोहनिर्लग्नं विषमक-र्णाविलम् प्रमाणहीनमनिष्टम् दृष्टमनुपूर्व्वोपचितं स्थिरविभक्ताजिलसत्कोटमनुपविष्टसुसमच्छिद्ररन्ध्रोपचितम-पोरक्तं वा । अथ जघनं घनमुच्छ्रितास्थि निर्मांसपेचकं कलाहीनातिरिक्तप्रमाणं बालध्यनुयायि समनर्थकरम् । अर्थकरमतपेचकं मलोपचितमहश्यशुष्कास्पृष्टचतुरस्रमाय-ताग्रं चारुबालधिपरिपूर्णाण्डकोषायततया नाशिरा-लपल्लवाकारमेहनमजयनञ्जयनं च श्यावाल्परूक्षस्फुटित-नखश्लिष्टसन्धि, परुषाधारतलसहा न पूजिताः पादाः धन्ये भवन्त्यपि च । विंशत्यष्टादशनखाः स्थिराः कूर्मस-माहिताः । गजानां पूजिताः पादा ये च सुविकचाविलाः । पादाः कचाविला रूक्षविवर्णाः परुषाः कृशाः । वार-णानाञ्च शस्ताः सुषै वा स्निग्धतनूरुहाः । सूक्ष्मबिन्दु-चितां स्निग्धां त्वचं शंसन्ति दन्तिनाम् । आसस्पृशो

विशालस्य विषाणौ पार्श्वे उन्नतौ । उपाहृतो विशालेन दन्तैकेन वारणः । अनुन्नताभ्यां संपन्नः कुदन्तः स्यान्नावधिः । ऊर्द्ध्वं वक्त्रान्तरालस्य प्रतिमानसमौ द्विजौ । ह्रस्वस्थूलातिदीर्घेण दन्तेनैकेन वा गुणाः । वर्ज्यास्ते शुभकामेन सर्व्व एवातिगर्हिताः । अब्दद्वये नदीजानां पञ्चमेऽब्दे वनौकसाम् । दन्तमूलपरीणाहान् द्विगुणान् कल्पयेत्परे । शरशक्तिधनुश्चक्रस्थूलपट्टिसलक्षणाः । दन्तापराजयो यस्य स नृपं वोढुमर्हति । रोमणां तु संश्रयो यश्च पिटक स उदाहृतः । स ज्येष्ठः सप्तभागोनो मध्यमोऽसौ मतङ्गजः । अन्यः षड्भागहीनः स्यात्ततोऽन्योहि न पूजितः । सुस्थाय पेचके दैर्घ्यं पृष्ठपार्श्वोदरान्तरम् । आनाहउच्छ्रय पादाद्विज्ञेयो यावदासनम्" । वनविशेषेण गजलक्षणं तत्रैव वार्हस्पत्यसंहिता । "वनानां मध्ये प्राच्यं कालिङ्गकमापरान्तिकं च त्रीणि वनान्यतिशोभनानि । त्रयाणामपि प्राच्यं वनं मध्यवनमपरेषामिव शोभनम् । तत्रैरावतकुलप्रसूतिसम्भवाः प्रायेण मृगमिश्रभद्रलक्षणाः महाकायाः करिणो भवन्ति । विनयसत्त्वशक्तिसम्पन्नाः पूगफलप्रभास्ताम्रत्विषः प्रविरलमदा गजा युद्धे चापसर्पणोपसर्पणनीरवा भवन्ति नातिक्रोधनाः समुद्वेजिताः सत्त्वं दर्शयन्ति । ते च हस्तैः कवलैः कायोपचयातिशयेन मदाभिमुखाः कर्त्तव्याः । कालिङ्गके वाऽऽपरान्तिके च त्रेतायुगोत्पन्नाः मन्दा महागजान्वयजा मन्दाभिधानाः प्रायशो मृगावयवाः सङ्कीर्णा गजाः समुत्पद्यन्ते । नात्युदग्रा जलदप्रभा नातिस्थिरा मन्दा युद्धप्रियाश्च गजा भवन्ति । तथा कारूषदाशार्णमार्गणेयकाभिधानेषु मध्यमा गजाः समुत्पद्यन्ते मृगमन्दजातयः ते च चार्व्ववयवाः मध्यमबलामध्यमप्रमाणाः स्थूलरोमाविलशरीरास्तनुरदा मन्दगतयः । तथा सौराष्ट्रे पाञ्चनदाभिधाने द्वापरयुगोत्पन्ना मृगमतङ्गजान्वया मृगप्राया गजाभवन्ति भीरवः कुत्सिताङ्गाः नातिचण्डादुर्मदाः दुर्वृत्ताश्च एवंविधा गजाः समुत्पद्यन्ते वनाच्च वनान्तरे गतेषु दुर्वृत्तेषु गजेषु धेनुकासम्पर्केण गुप्तवनेऽपि कालिङ्गकेऽपि । त्रासशीलश्च भीरुश्च ह्रस्ववामनमस्तकः । हीनाग्रभोगो दुःशीलस्त्वसंहतशरीरभृत् । समुच्छ्रितस्तनायामो परीणाहविवर्जितः । मृगस्वरूपो दीनश्च मृगजातिर्गजाधमः । अतः परं प्रवक्ष्यामि संकीर्णस्य च लक्षणम् । पशुत्वाद्वारणानाञ्च श्रुवां च वियोनिषु । धेनुकासु भवन्त्येते गजा संकीर्णलक्षणाः । भद्रो मन्दो मृगो वाथ शुद्धजातिः प्रजायते । तस्मान्मिश्राणि रूपाणि गदतो मे निबोधत । आनन्त्यान्मिश्रजातीनां निश्चयो नोपपद्यते । तथापि किञ्चिदुद्देशान्मिश्रलक्षणमुच्यते । भद्रमन्दो भद्रमृगो भद्रमन्दमृगस्तथा । इह भेदत्रयं मन्दमृगयोरपि जायते । भद्रादीनां च सर्व्वेषां रूपं संकीर्णसंज्ञितम् । ऊर्द्ध्वाधः कार्य्यभेदेन तज्जानि भिद्यते द्विधा । त्रिधा च भिद्यते भूय एकैकन्तु यथाक्रमम् । एवमष्टादशविधं कीर्त्तितं मिश्रलक्षणम् । शुभाशुभं विभागेन साम्प्रतम् निगदाम्यहम् । भद्रमन्दो भवेदिष्टो मृगमन्दस्तथाधमः । भद्रमन्दमृगश्चैव मध्यमः परिकीर्त्तितः । भद्रजातिर्महाकायो मजो मध्ये तु दन्तिनाम् । मन्दोऽवयवलेशेन स युक्तो भवति द्विपः । मृगस्यापि हि रूपेण किञ्चिन्मात्रानुगतेन वै । अशुभत्वं न भद्रस्य जायते शोभनो हि सः । लोचनानां प्रधानत्वं यस्माच्छास्त्रेषु कीर्त्तितम् । तस्मान्मृगाक्षिसंयुक्तो भद्रोऽपि हि न शस्यते । भाद्रेणोपरिकायेन मान्द्येनाधोगतेन वा । उन्नतो हि गजानान्तु भद्रमन्दो भवेद्गजः । अनेनैव हि रूपेण विपर्य्यासेन यो गजः । सोऽपि शोभन एव स्यान्मन्दभद्र इति स्मृतः । एवंविधात् मृगे चापि लक्षणान्मिश्रलक्षणम् । महावयवबाहुल्यात् मृगरूपस्य लेशतः । भद्रावयवनिर्मुक्तो मध्यमोऽसौ गजो भवेत्" कायेन यो भवेद्भद्रो मन्दो वापि मतङ्गजः । मृगगात्रोऽपरस्यैव स भवेद्वेगवान् गजः । मृगरूपाधिकत्वं च दृश्यते यस्य दन्तिनः । अधमस्तु स विज्ञेयः सत्त्वशक्तिविवर्जितः । करदन्ताक्षिकुम्भैश्च यो मृगो जायते गजः । शेषावयवभद्रोऽपि क्षीण एव भवेदसौ । एवमुद्देशमात्रेण मिश्रभेदा मयोदिताः । नोदिता येऽपि तेऽत्रापि मिश्रा ज्ञेया मनीषिभिः । मिश्रलक्षणसंयोग उत्कृष्टं यस्य दृश्यते । रूपन्नामधेयोऽसौ जायते हि मतङ्गजः । अतः परम्प्रवक्ष्यामि लक्षणं गिरिचारिणाम् । तथा नदीचराणां च तथैवोभयचारिणाम् । महाबला महाकायाश्चितांसा गिरिचारिणः । सुपार्श्वाश्चारुदिग्धाङ्गा दृढपादागतक्रमाः । उदग्रा निर्भयाश्चैव सल्लकीकवलप्रियाः । तटाघातविधौ भग्नदन्तदारितभूतलाः । शार्दूलादिमहासत्त्वसंस्फोटातङ्कवर्जिताः । मदस्रावक्षतोत्साहादुर्दमावारिभीरवः । पांशुक्रीडारता नित्यं द्रुमोन्मूलनतत्पराः । शिलावेष्टनाशीलाः स्वेदसन्तापनीरकाः । कराग्रस्फोटनिरता सीत्कारकरणप्रियाः । अनुदग्राघनश्यामाः सीकरोद्गिरणप्रियाः । तोयकर्म्मणि निःशङ्का मतङ्गाश्च नदीचराः । उभयेषुचर-

न्ते ते नदीपर्व्वतसानुषु। ये गजाहृष्टमनसस्ते भवन्त्यतिशोभनाः। सर्वेषामेव नागानां छायालक्षणमुत्तमम्। यद्यथा जायते यस्य तत्तथैवाभिधीयते। सत्वांशकत्वाद्भद्रस्य पाटला भवति प्रभा। नवपल्लवसच्छाया स्निग्धा तनुतनूरुहा। तथा तमोऽंशकत्वाच्च कृष्णा मन्दस्य जायते। तदृणाम्बुद संकाशा स्थूलकृष्णकचाविला। रजोऽंशकत्वाच्च तथा मृगस्यापि हि धूसरा। मलिनाम्बुदसंकाशा रूक्षा तनुतनूरुहाः। एवं छायाविशेषाः स्युर्भद्रादीनामयोदिताः। छाया संमिश्रभावाच्च मिश्रा भवति दन्तिनाम्। वनजातिगुणैर्भद्रः गजश्रेष्ठो नरोत्तम!। तमोऽंशकत्वं मन्दस्य यद्युक्तं निबोध मे। दुर्मनस्त्वं तथाऽऽलस्यं निद्रालुत्वं च मूढता। गम्भीरवेदिता चेति मन्दस्य तम उच्यते:। एवं रजोगुणो राजन् मृगस्तेन रजोंऽशकः। धैर्यं स्थैर्यं पटुत्वं च विनीतत्वं सुकर्मता। अन्वर्थवेदिता चैव भयस्थानेषु मूढता। सुभगत्वं च धीमत्त्वं सत्वस्यैते गुणाः स्मृताः। अतः सत्वांशकोराजन् भद्रजातिरुदाहृतः। चिक्वत्वं बाहुशिरसोरन्तर्मणिगतं तथा। दन्तयोर्मधुवर्णत्वं नेत्रयोर्मधुपिङ्गता। आसनस्य पृथुत्वञ्च पूर्णता कुक्षिपार्श्वयोः। पृथुत्वं पृष्ठभागस्य घनत्वं समसन्धिता। स्निग्धच्छाया त्वथायामःपरिणाहोच्छ्रयौ तथा। सश्रीकत्वं गुरुत्वं च कायस्यैते गुणाः स्मृताः। सर्वलक्षणसंपूर्णो दृश्यते न मतङ्गजः। प्रधानावयवे लोके यत्नः कार्यो मनोषिभिः। हीनं कृष्णं च कल्माषं पुष्करं न प्रशस्यते। संपूर्णं मांसलं रक्तं सुकुमारं शुभं स्मृतम्। त्र्यङ्गुलन्तु भवेद्धीनं हीनस्पतिविनाशनम्। कृष्णं भर्तृविघातायकल्माषं भर्तृरोगदम्। संपूर्णं सिद्धिदं भर्तुः पुष्करं चतुरङ्गुलम्॥ सौभाग्यदं मांसलन्तु सुकुमारं तथार्थदम्। रक्तपद्मदलच्छायं तथा मिष्टान्नपानदम्। अतः परं शुभे स्त्रो ये स्रोतसी पाटलोदरे। पञ्चाङ्गुलप्रमाणेन वर्तुलत्वेन चार्थदे। अत्रासुखं च ताम्रं च कर्णतालं सुखप्रदम्। ह्रस्वा स्थूला च विपुला चिलिणो श्यामलोनिता। कुञ्चिता च तथा दृष्टिः सप्तधा दन्तिनां मता। तासां तु त्र्यङ्गुलायामा सा ह्रस्वेत्यभिसंज्ञिता। ह्रस्वा करोति नृपतेर्विनाशं शीघ्रमेव हि। स्थूल दुर्भिक्षकरणी श्यामला नृपदुःखदा। करोति चिलिणोनित्यं तस्यैव तु वसुक्षयम्। भुग्ना दृष्टिर्विनाशाय राज्ञोधनविनाशिनी। कुञ्चिताहीनयोश्चैव युद्धकाले रिपोर्जयम्। अतः परं प्रवक्ष्यामि क्रमेण करलक्षणम्। न करं दीर्घमिच्छन्ति शालघेः शास्त्रपण्डिताः। न बालधिसमं ह्रस्वं नातिदीर्घं क्रमायतम्। न तनुं नातिकायं च न रूक्षं न क्षतव्रणम्। नाक्रमेण क्षतोत्सेधं न हीनं दशनान्तरम्। न ह्रस्वाङ्गुलिसंयुक्तं नातिसंकटपुष्करम्। एतल्लक्षणसंयुक्तं करं शंसन्ति कोविदाः। बालधेः सुसमोहीनः समोवा दन्तिदुःखदः। अतिदीर्घोभवेद्भर्तुरायुषः क्षयकारकः। तनुर्व्याधिकरो यातुरतिकायोऽर्थनाशनः। रूक्षोव्याधिव्रणङ्कुर्य्याद्यातुर्व्रणक्षतां व्यथाम्। प्रतिलोमेन च स्थूलोगजस्य सुखनाशनः। असमञ्जसहीनश्च असमञ्जस वर्तुलः। दुःखशोकभयायासकर्त्ता भवति नित्यशः। दशनान्तरहीनश्च जायते दन्तिरोगकृत्। कथितं पूर्वमेतेषु पुष्करांगुलिलक्षणम्। अतो मया न कथितं साम्प्रतङ्करलक्षणे। निर्वलीकोदीर्घरोमा क्रमवृत्तत्वसंयुतः। अणुबिन्दुर्विचित्रश्च दैर्घ्येण च शताङ्गुलः। बालधेः पुष्करं यावदायामोजात्यपेक्षया। अरत्निवयाऽऽनाहश्च हीनहीनतरक्रमात्। युक्तस्त्वनेन मानेन करः पूज्यतमो भवेत्॥ निर्वलीके च सौभाग्यन्दीर्घरोमार्थदः स्मृतः। क्रमवृत्तोजयं कुर्य्यादणुविन्दुर्युतोधनम्। सुप्रमाणं भवेद्राज्ञः करस्य परिवर्द्धनः। आनाहवांश्च सततं राज्यस्फीतिकरोभवेत्। करस्य कीर्त्तितं ह्येतल्लक्षणं शुभसंज्ञितम्। अतःपरं प्रवक्ष्यामि लक्षणं दन्तवेष्टयोः। कचहीनावतिस्थूलौ विषमौ शिथिलौ तथा। दन्तवेष्टौ सदा भर्तुः प्रमाणाभ्यासमौख्यदौ। दन्तमूले सुसम्बद्धौ सकचौ किञ्चिदुन्नतौ। दृष्टौ सदा तथा भर्त्तुर्वृद्धिदौ परिकीर्त्तितौ। अतःपरं प्रवक्ष्यामि लक्षणन्तु विषाणयोः। व्यस्तता सङ्कटत्वं च प्रांशुता भस्मशुभ्रता। वक्रत्वं ह्रस्वता चैव धूसरत्वं च रूक्षता। मृदुताऽधोगतित्वञ्च हीनता मूलमध्ययोः। प्रान्तयोः स्थूलता चैव दीर्घता चातिमात्रता। सर्पच्छत्रककान्तित्वं दोषाह्येते चतुर्दश। दन्तयोस्तु समाख्याताः फलं तेषान्निबोध मे। व्यस्तौ च सङ्कटौ दन्तौ मदहानिकरौ तु तौ। दन्तिनस्तनुतायुक्तौ व्याधिदौ परिकीर्त्तितौ। भस्मशुभ्रौ तथा भर्तुर्मेहा क्लेशकरौ मतौ। वक्रौ चार्थविनाशाय ह्रस्वौ च परिकीर्त्तितौ। धूसरौ रूक्षतायुक्तौ गजस्यायुर्विनाशनौ। मृदुत्वयुक्तौ नागस्य शल्यव्रणकरौ मतौ। स्थूलाग्राधोगतित्वे च भर्तुर्यातुश्च दुःखदे। अशुभं लक्षणं ह्येतद्दन्तयोः कथितं मया। शुभं च साम्प्रतम्वक्ष्ये यथावदनुपूर्वशः। स्निग्धौ समौ सुनिष्क्रान्तौ संपूर्णौ व्रणवर्जितौ। मुकुलाग्रौ दृढौ वापि ताम्रचूडौ ह्रवेोपमौ। दक्षिणाभ्युन्नतो किञ्चित् मृणालकुमुदप्रभौ। मुग्धकुन्ददलच्छायौ हेमचम्पक-

पिञ्जरौ । मधुपिङ्गौ घृतच्छायौ पीयूषसदृशप्रभौ । केतकीकुसुमाभौ च मृगाङ्ककिरणप्रभौ । अध्यर्द्धारत्निमानौ च तदर्द्धानाहसंयुतौ । अमीभिर्लक्षणैर्युक्तौ दन्तौ नागस्य सम्मतौ । स्निग्धौ धनप्रदौ भर्त्तुरायुषश्च करौ मतौ । अरिघ्नौ तु सुनिष्क्रान्तौ संपूर्णौ राज्यदौ मतौ । निर्व्रणौ राज्यलाभाय मुकुटाग्रौ जयप्रदौ । दृढौ रोगविनाशाय ताम्रचूडौ हलोपमौ । अरिसंघविनाशाय कीर्त्तितौ शास्त्रपण्डितैः । दक्षिणाभ्युन्नतौ भर्त्तुः कीर्त्तितौ भाग्यकारकौ । मृणालकुमुदच्छायौ सुभिक्षारोग्यकारकौ । हेमचम्पकसङ्काशौ वस्त्राभरणदौ स्मृतौ । कुरुतो मधुपिङ्गौ च निःसपत्नं महीतले । पशुलाभकरौ ज्ञेयौ घृतपीयूषसन्निभौ । केतकीकुसुमाभौ च भर्त्तुर्वंशविवर्द्धनौ । अध्यर्द्धारत्निकौ दन्तौ सुतभृत्यजयप्रदौ । आनाहमानसंयुक्तौ सदा स्फीतिकरौ मतौ । इदं शुभकरं राजन् ! दन्तयोर्लक्षणं मतम् । अतःपरं प्रवक्ष्यामि नेत्रयोरपि लक्षणम् । मार्जारनकुलक्रौञ्चशाखामृगनिभेक्षणान् । सर्व्वदोषकरान् राजन् ! गजान् दूरेण वर्जयेत् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । निर्धूमाग्निशिखाकारे इन्द्रनीलसमप्रभे । सौम्यदृष्टिसमायुक्ते त्र्यङ्गुले लोचने शुभे । स्निग्धे वृद्धिकरे भर्त्तुर्मधुपिङ्गे जयप्रदे । दीप्ते दीप्तिकरे चैव प्रतापायतने तथा । कलविङ्काक्षिरूपे च धनधान्यविवर्द्धने । चामीकरकरे नित्यं रक्तपद्मदलप्रभे । पद्मरागनिभे चैव रत्नालङ्कारकारके । निर्धूमाग्निशिखाकारे प्रतिपक्षभयङ्करे । मानयुक्ते च सौम्ये च लोचने बलवर्द्धने । अक्षिकूटकटोद्देशनिम्नौ राज्यविनाशनौ । संपूर्णौ च बलोत्साहमदवृद्धिकरौ मतौ । दन्तान्तरं भवेन्नित्यं तालुकं षोडशाङ्गुलम् । षडङ्गुलं पृथुत्वेन वंशमध्यगतं भवेत् । तथा शुभाशुभं चैव लक्षणज्ञैः प्रकीर्त्तितम् । क्षरम्परिदग्धञ्च कृष्णं कल्माषमेव वा । चतुर्व्विधमनिष्टं स्याद्यथावदभिधीयते । कृष्णं मसीसमं ज्ञेयं कल्माषं कृष्णलोहितम् । मांसलं धूम्रवर्णं च परिदग्धं प्रकीर्त्तितम् । क्षरञ्च तिलच्छायं कथितं शास्त्रवेदिभिः । गर्भस्थस्य यदा पित्तं चीयते तालुकं भृशम् । कृष्णतालुस्तदा नागो जायते पापलक्षणः । व्याधिभिः पीड्यते नित्यं वातपित्तकफोद्भवैः । तृतीयां वा चतुर्थीं वा दशां प्राप्य विनश्यति । संग्रामे वा पलायेत बहुशस्त्रक्षतव्रणः । शस्त्रसङ्घातपूर्णाङ्गः कृतान्तभवनं व्रजेत् । वातपित्तकफा यस्य कुर्व्वन्ति तालुके गदम् । गर्भस्थस्यैव कल्माषतालुकं तस्य जायते कृष्णतालुनि ये दोषा रक्ते चैव गुणाः स्मृताः । कल्माषतालुनस्ते तु भवन्ति च द्वयोरपि । रक्तच्छायं यदा वंशे पार्श्वयोस्त्वसितं भवेत् । तदा मध्यफलं ज्ञेयं गुणदोषसमाश्रयात् । यदा वंशे च कृष्णं स्यात्पार्श्वयोस्ताम्रता भवेत् । भर्त्तुरुद्वेगजनकं कल्माषं तालुकं तदा । किञ्चिद्धीनं तु यत्तालु परिदग्धं तदा भवेत् । नागस्याधोरणस्यापि बलक्षयकरं हि तत् । क्षरं च भवेत् तालु पित्तकोपसमुद्भवम् । महामात्रविनाशाय वारणस्योपजायते । (महामात्रो हस्तिपकः) कृष्णतालोरपि यदा दक्षिणावर्त्तनं भवेत् । दृश्यते नित्यमेवं हि तदासौ दोषवर्जितः । यथा गृह्णाति नो दोषान् सुलोकः सुसमाहितः । गुणान् करोति हृदये न तथा कथितानपि । दोषघ्नं लक्षणं यस्य यदाचार्य्यैरुदाहृतम् । तत्तथैवावगन्तव्यं नान्यथात्रापि भाषितम् । एवं जिह्वापि मन्तव्या तालुनः समलक्षणा । अरत्निमात्रा दैर्घ्येण विस्तारेऽष्टाङ्गुला मता । अशुभं लक्षणं ह्येतत्तालुकस्य मयोदितम् । शुभं च साम्प्रतं वक्ष्ये लक्षणं शृणु चानघ ! । रक्तं श्वेतं कषायं च तालुकं स्यात् शुभप्रदम् । रक्तं वृद्धिकरं भर्त्तुस्तथा चायुर्व्विवर्द्धनम् । दन्तिनोऽशोकपुष्पाभं रिपुक्षयकरम्मतम् । श्वेतं पुष्टिकरं चापि वारणस्योपजायते । चम्पकाभं तथा भर्त्तुरारोग्यस्य विवर्द्धनम् । कषायं सर्व्वदा स्यात प्रयातुः सौख्यवर्द्धनम् । एवं जिह्वापि रक्ताभा सर्व्वसौख्यप्रदा मता । अतःपरं प्रवक्ष्यामि सृक्कण्याश्रित्य लक्षणम् । दन्तिनो मानहीने च सृक्कणी मानवर्जिते । (सृक्कणी ओष्ठसन्धी) सुखरोगकरे नित्यं पण्डितैः परिकीर्त्तिते । सर्व्वसौख्यप्रदे तस्य संपूर्णे द्वादशाङ्गुले । अतःपरं च प्रवक्ष्यामि लक्षणं चिबुकोष्ठयोः । अरोमशश्लक्ष्णयुक्तमाताम्रं च तथा लघु । गजस्यौष्ठं न शंसन्ति मुनयो दन्तरोगदम् । दीर्घरोमा सुसंपूर्ण ओष्ठः पद्मदलप्रभः । षोडशाङ्गुलानाहश्च हस्तार्द्धायतः शुभः । भर्त्तुरायुःकरो दीर्घो दीर्घरोमा च कीर्त्तितः । पूर्णः पूरयते कोषं रक्तः सौभाग्यदो भवेत् । अरोमशं तथाहीनं चिबुकं न प्रशस्यते । तद्धि वारणनाथस्य सुखरोगकरम्मतम् । चतुरङ्गुलमानन्तु स्थूलं रोमाचितं यत् तत्प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम् । निम्ने च विषमे चैव हीने चैवाशुभे मते । मदहानिकरे नित्यं सगदे कर्णरोगदे । शस्त्रच्छिन्नादयुक्ते च समे चैव सुखप्रदे । मानं च कर्णपाल्यास्तु मूलादारभ्य गृह्यते । बाह्ययावधि कुम्भं च हीनं निम्नं च गर्हितम् । सुखरोगकरं नित्यं

सत्यहानिकरं च तत् । पूर्णं चैवोन्नतं सार्द्धहस्तमात्रायतं भवेत् । तद्धि वारणनाथस्य सुखरोगकरं मतम् । चतुरङ्गुलमानं तु स्थूलम् रोमाविलञ्च यत् । तत् प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम् । अरत्निपरिणाहञ्च करिणां सत्वशक्तिदम् । वामनं हस्तहीनञ्च परिणाहविवर्जितम् । अव्यक्तञ्च न शंसन्ति वातकुम्भं विपत्करम् । द्वादशाङ्गुलविस्तारन्दैर्घ्येणाष्टादशाङ्गुलम् । व्यक्तं शुक्तिपुटाकारं तद्भर्त्तुर्लाभकारकम् । गर्त्ताकारे च निर्मांसे कठिने चातिकुञ्चिते । शिरसोरोगजनने गजस्यारोहकस्य च । संपूर्णे सुकुमारे च सुप्रशस्ते प्रकीर्त्तिते । राज्यवृद्धिकरे नित्यं भर्त्तुर्विजयकारके । इदमेव हि विज्ञेयं लक्षणं कटपार्श्वयोः । अतःपरं प्रवक्ष्यामि लक्षणं कुम्भयोरपि । विषमत्वमरोमत्वं देहच्छायाविवर्णता । समता कण्ठपृष्ठाभ्यां समाधिक्यमपूर्णता । व्यक्तता वामनत्वं च परिणाहविहीनता । तनुभावः शिखरयोः कुम्भदोषा दश स्मृताः । भर्त्तुर्शापत्करौ ज्ञेयौ विषमौ रोमवर्जितौ । देहच्छायाविवर्णौ तु शत्रुलोकविवर्द्धनौ । कण्ठपृष्ठसमौ चैव प्रयातुः प्रविनाशनौ । मानाधिकौ च हीनौ च भर्त्तुरुच्छेदकारकौ । व्याप्तौ च वामनौ चैव भर्त्तुः कीर्त्तिविनाशनौ । परिणाहविहीनौ च कोशक्षयकरौ मतौ । शिखरस्य तनुत्वेन युक्तौ कुम्भौ तु रोगदौ । अशुभं लक्षणं ह्येतत्साम्प्रतञ्च शुभं शृणु । समौ दीर्घकचाक्रान्तौ विस्तीर्णशिखरौ तथा । कर्णमूलात्समारभ्य हस्तार्द्धजमितोच्छ्रयौ । सुसंहतौ च पीनौ च कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च देहच्छायासमप्रभौ । आरोहकशरीरार्द्धदर्शनावरणक्षमौ । सम्नीकौ च सुहसौ च शुभौ कुम्भौ प्रकीर्त्तितौ । समौ च दीर्घरोमाणौ भर्त्तुः श्रीसौख्यकारकौ । समानौ रिपुनाशाय तथैव च समुन्नतौ । सुसंहतौ च पीनौ च वरस्त्रीलाभकारकौ । शत्रुनाशकरौ ज्ञेयौ कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च सुखदौ रोगनाशनौ । आरोहिस्थगितार्द्धौ च सम्नीकौ च जयप्रदौ । इत्तौ च हस्तिनां कुम्भौ पुष्पालङ्कारकारकौ । अतःपरं प्रवक्ष्यामि कर्णयोरपि लक्षणम् । निर्लोमशौ स्नसाकीर्णौ तनुच्छिद्रौ तनुत्वचौ । (स्नसा सिरा) सङ्कटौ विषमौ रूक्षौ लुण्ठिताग्रौ च निष्ठुरौ । स्तब्धौ च वर्त्तुलौ चैव तासौ नागस्य निन्दितौ । फलञ्च साम्प्रतं वक्ष्ये यथावदनुपूर्वशः । निर्लोमशौ स्नसाकीर्णौ गजस्य कर्णरोगदौ । निष्ठुरौ लुण्ठिताग्रौ च यन्तु कोशहरौ मतौ । स्तब्धौ च वर्द्धलौ चैव गजस्यायुर्विनाशनौ । अतःपरं प्रवक्ष्यामि शुभकर्णविनिश्चयम् । द्विरत्निमानसंयुक्तौ सिराजालविवर्जितौ । समत्वचौ महाच्छिद्रौ स्निग्धौ दुन्दुभिनिस्वनौ । कपोलमण्डलास्फालाततशब्दौ मुहुर्मुहुः । कर्णौ चामरसंकाशौ म्रदुरोमकृतार्चनौ । अजर्जरमृदुप्रान्तावीषद्गुग्नावचूलिकौ । मयूरतालवृन्ताभौ सुविस्तीर्णसमौ शुभौ । द्विरत्निमानसंयुक्तौ भर्त्तुरायुःकरौ मतौ । स्नसाजालविनिर्मुक्तौ शिरोरोगविनाशकौ । समत्वचौ महाच्छिद्रौ गजलाभकरौ मतौ । स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभिस्वनौ । शत्रुनाशकरौ प्रोक्तौ म्रदुरोमीकृततार्चनौ । अजर्जरमृदुप्रान्तौ प्रयातुः सौख्यकारकौ । गजस्योपचयायैव ईषद्गुग्नायचूलिकौ । मयूरतालवृन्ताभौ तुरङ्गबलवर्द्धनौ । सुविस्तीर्णौ समौ भर्त्तुर्भूमिलाभकरौ मतौ । कर्णयोस्तु समाख्यातं मयैतत् शुभलक्षणम् । कण्ठस्य साम्प्रतं वक्ष्ये यथावदनुपूर्वशः । अवक्रो हीनो दीर्घश्च कण्ठश्च शुभदो भवेत् । आरोहकप्रभूणाञ्च क्रमशः कुञ्जरस्य च । अवक्रः परिणाहेन सप्तषष्ट्यधिकं मतम् । अङ्गुलानां तथायामे द्वादशैवाङ्गुलानि तु । सम्पूर्णपिण्डितोदग्रश्चान्तर्णविविभूषितः । कण्ठो वारणनाथस्य एवं भूतः सुपूजितः । ऋजुः प्रमोदजननः सम्पूर्णः कार्य्यसिद्धिदः । अह्रस्वो जयकृद्भर्त्तुः कीर्त्तितः पूर्णपिण्डकः । उदग्रो वंशवृद्धिं च प्रतापं कुरुते तथा । अन्तर्णशिरमायुक्तो मणिरत्नप्रदो भवेत् । करालञ्चातिनिम्नं च आसनं न प्रशस्यते । करालं यातुरशुभं निम्नं च व्रणकारकम् । दैर्घ्येण हस्तमात्रं तु विस्तीर्णञ्च शुभं स्मृतम् । विस्तीर्णं विस्तृतं राज्यं सम्पूर्णं कुरुते जयम् । वंशस्याथ प्रवक्ष्यामि लक्षणं तु शुभाशुभम् । अत्युच्छ्रितो निम्नपारः ह्रस्वो वंशो न शस्यते । राज्ञां च पादरोगाणां कर्त्ता च स भवेत्सदा । वक्षत्यङ्गुलायासमासनात्पश्चिमासनम् । यावत् प्रपूर्य्यते पार्श्वं वंशोऽश्वफलकाकृतिः । शुभो ज्ञेयो गजेन्द्राणामायामः कुरुते सुखम् । पूर्णपार्श्वस्तु लाभाय धनुःपृष्ठः श्रियं भवेत् । अरत्निद्वयमानं तु पेचकात्पश्चिमासनम् । घनास्थि विषमं निम्नकुहितं पुच्छरोगदम् । मांसोपचयपूर्णं च विस्तीर्णञ्च शुभं मतम् । जघनोपरि रोगाणां तद्धि नाशकरं मतम् ।(पेचकात् पुच्छमूलात्)। पुच्छो गजस्य नो शस्तो बहुदीर्घोऽतिलम्बितः । करोति महतीं पीडां राज्ञश्चाधोरणस्य च । द्व्यङ्गुलस्तु पृथुत्वेन दैर्घ्येणाष्टादशाङ्गुलः । संपूज्यः पेचको ज्ञेयो गजभर्त्तुः सुखप्रदः ।

वक्रं स्थूलञ्च ह्रस्वं च पुच्छं कचविवर्जितम् । समानाहं च नागस्य सर्व्वदोषकरं भवेत् । अवक्र ऋजुदीर्घश्च ग्रन्थिहीनः सुमेचकः । गोपुच्छबालप्रतिमकचव्रातविभूषितः । भूमिं तु न स्पृशेत् यस्तु चतुर्भिश्चाङ्गुलैः सदा । स शुभो बालधिर्ज्ञेयो गजभर्त्तृसुखप्रदः । अतिप्रमाणं ह्रस्वं च कर्व्वूरं विगतप्रभम् । सिरालं चाशुभं मेढ्रं राजहस्तिपदुःखदम् । शस्तं षड़ङ्गुलायामं नाहतः षोड़शाङ्गुलम् । सिराजालविनिर्मुक्तमाम्रपल्लवसप्रभम् । द्व्यङ्गुलं स्रोतसा युक्तं विन्दुमात्रविवर्जितम् । मेढ्रं प्रशस्तं विज्ञेयं भर्त्तुर्जीवितवर्द्धनम् । अतःपरं प्रवक्ष्यामि लक्षणं गात्रयोरपि । हीने तनू च दीर्घे च समांसोच्छ्रये तथा । विषमे च कचाक्रान्ते गात्रे नागस्य निन्दिते । हीने तनू च कुरुतः प्रयातुर्विनिपातनम् । सममांसोच्छ्रये यातुर्विषमे च विपत्करे । कषाविद्धे गजस्यैव गात्ररोगकरे तथा । अतःपरं प्रवक्ष्यामि गात्रयोः शुभलक्षणम् । सार्द्धद्विरत्निरत्निः शताङ्गुलसमानता । एवंमिते स्मृते गात्रे भर्त्तुरारोग्यसौख्यदे । समे च कचहीने च गजलाभकरे तथा । गजस्य पुष्टिदे नित्यं मांसले च घने स्मृते । गात्रे वारणनाथस्य एवंभूते शुभे मते । चिपिटे वा सफलके गात्ररोगकरे सदा । संपूर्णे राज्यदे भर्त्तुर्गजस्य बहुत्प्रदे । तथैव रोमनिर्हिते गजस्य गलरोगदे । अतःपरं प्रवक्ष्यामि नखानाञ्च शुभाशुभम् । हीनाःकृष्णाश्च खण्डाश्च रूक्षाश्च न नखाः शुभाः । सदा च रोगदा हीनाःकृष्णा भर्त्तृविनाशनाः । खण्डारूक्षागजस्यैव पादव्याधिविवर्द्धनाः । स्निग्धाश्चन्द्रार्द्धसङ्काशा मानेनैव पुरोनखाः । सप्तादिपञ्चसंख्यानि अङ्गुलानि क्रमेण हि । एवं विधा नखाः शस्ता भर्त्तुरारोग्यकारकाः । अतःपरं प्रवक्ष्यामि पादयोरपि लक्षणम् । हीनौ सुष्ठुतलौ रूक्षौ चरणौ दन्तिदुःखदौ । हस्तप्रमाणौ दैर्घ्येण कूर्म्माकारौ सुखप्रदौ । अतःपरं प्रवक्ष्यामि लक्षणञ्चापराश्रितम् । अत्युच्छ्रिते च हीने च निन्दिते चापरे तनू । सम्पूर्णे च शुभे ज्ञेये त्र्यरत्न्यायामसंयुते । निन्दिते रोगदे ज्ञेये पूजिते प्रभुसौख्यदे । द्वादशाङ्गुल हीनं तु आसनात्पश्चिमासनम् । अपरपादयोश्चापि आयामोऽरत्निमात्रकः । नखानां च तथा मानं षड़ादिचतुरङ्गुलम् । प्रधानावयवानान्तु लक्षणं कथितं यथा । उत्सेधायामनाहानां साम्प्रतं कथयाम्यहम् । समतन्तुसमायुक्ततन्तुना वर्त्तितेन च । सुप्रशस्ते दिने नित्यं मानं कुर्वीत मानवित् । सप्तारत्नि गजेन्द्राणां प्रमाणं वनजन्मनाम् । आसनं यावदुत्सेधस्तत्रसप्रिस्त कीर्त्तितः । मेचकात्प्रतिमानन्तु आयामोऽरत्नयो नव । मध्यदेशे तदानाहो दशरत्निः प्रकीर्त्तितः । मानमेतद्धि भद्रस्य मुनिभिःपरिप्रकीर्त्तितम् । सप्तमेन तु भागेन हीनं मन्दस्य जायते । मन्दाद्धीनं मृगाख्यस्य षड्भागेन प्रकीर्त्तितम् । एवं क्रमेण वक्तव्यं मानं मानविशारदैः । किञ्चिन्नूमानाधिके वापि न दोषः संप्रपद्यते । दोषाणां च गुणानाञ्च वृद्धिरेव फलप्रदा । सत्वं हि वारणेन्द्राणां नित्यं तन्वेषु संस्थितम् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । नीलच्छाये अतीक्ष्णे च गजे सत्वं प्रतिष्ठितम् । मार्जारवानरादीनां सदृशे नोबलं गजे । हीनसत्वाश्च जायन्ते गिरिकूटोपमा अपि । अधिकं पुष्करं यस्य मांसलत्वेन जायते । प्रभयाच कषायं स्यान्मानेनाङ्गुलपञ्चकम् । किञ्चिदूने च विज्ञेये स्रोतसी चतुरङ्गुले । स्थूलपञ्चाङ्गुलायामा त्र्यङ्गुला नाहमानता । हस्तोऽपि पूर्व्वमानस्य स्थूलत्वेनाधिकोभवेत् । रोमशोनातिदीर्घश्च पृथुलः षड्भिरङ्गुलैः । आयामेन च हीनःस्यात् पूर्व्वमानात् षड़ङ्गुलैः । नातिगोपुच्छसंस्थानःकृष्णविन्दुविभूषितः । आनाहे रत्निमानौ तु सार्द्धहस्तद्वयायतौ । पीयूषकुमुदच्छायौ किञ्चिच्चम्पकपिङ्गलौ । स्निग्धौ मुग्धतमावेव दन्तौ नागस्य कीर्तितौ । दन्तावेष्टावतिस्थूलौ कचाक्रान्तौ सुनिष्ठुरौ । पञ्चाङ्गुलौ कटौ ज्ञेयौ मांसोपचयपूरितौ । ज्ञेये कटोपरि तथा स्रोतसी द्व्यङ्गुलान्तरे । एकाशीत्यङ्गुलानाहे द्वाविंशत्यङ्गुलायते । किञ्चिन्नतं कचाक्रान्तं वाहित्यं परिकीर्तितम् । प्रतिमानं तु विज्ञेयं हस्तः सचतुरङ्गुलः । अध्यर्द्धरत्निमानं च प्रमाणान्तरभेदतः । आयामस्तु विज्ञेयस्त्वधरस्तु दशाङ्गुलः । विंशत्यङ्गुमानस्तु परिणाहोऽभिधीयते । पञ्चाङ्गुलं तु चिबुकं सृक्किणी तु नवाङ्गुले । षड्विंशदङ्गुलायामे सङ्गते परिकीर्त्तिते । अध्यर्द्धरत्निकौ कर्णौ विस्तारेण कचाचितौ । कषायपल्लवौ स्थूलौ कृष्णविन्दुविचित्रितौ । सपन्नागकरायामावचलौ कचाविलौ । पञ्चाङ्गुलान्तरौ पीनावुभावोष्ठौ दशाङ्गुलौ । कर्णात् कर्णान्तरं यावत् षत्सवत्यङ्गुलं शिरः । वातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशाङ्गुलम् । अङ्गुलानां शतं सार्द्धमानाहि द्व्यङ्गुलाधिकम् । आयतत्वं च कण्ठस्य दशाङ्गुलमिति स्मृतम् । भद्रस्यैवासनं ज्ञेयं तथोक्तं सप्तरत्निकम् । षडङ्गुलोच्छ्रितं स्थूलं तुल्यं लाङ्गूलमानतः । पुच्छमूलाद्द्विहस्तन्तु जायते पश्चिमासनम् । उच्छ्रयेण

तु हीनं स्यादासनं षड्भिरङ्गुलैः । पेचकस्त्र्यङ्गुला-यामोऽलम्बत्वेनाङ्गुलत्रयम् । विंशत्यङ्गुलमानाहे भवेत् पुच्छोऽयथागमम् । प्रान्तपादक्रमेणैव तथायामेऽङ्गुलत्रयम् । दैर्घ्येण तु स विज्ञेयो भूमेरष्टाङ्गुलोच्छ्रितः । इदं बालधिमानं तु मन्दस्य परिकीर्त्तितम् । सार्द्धद्व्यरत्निके मूले अपरे संप्रकीर्त्तिते । उदरे चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् । विंशत्यङ्गुलमानाहे कृष्णच्छायं सदा भवेत् । पञ्च चत्वारि च त्रीणि अङ्गुलानि नखाः क्रमात् । आपाण्डुविवराः कुन्दाभासाश्चापरपादयोः । अनेनैव तु मानेन गात्रपादसमाश्रयाः । नखा मन्दस्य विज्ञेयाश्चरणाश्च कचाविलाः । अतिस्थूलः पृथुत्वेन सार्द्धहस्ताधिकः करः । अरत्निकं वा, दैर्घ्येण प्रमाणं गात्रयोरपि । उरोमणिस्तथा चैयोरत्निमात्रोऽतिमांसलः । विंशत्यङ्गुलमानस्तु अन्तर्गलमणिर्भवेत् । अनेनैव हि मानेन वातकुम्भः प्रकीर्त्तितः । एते प्रशस्ता मन्दस्य नृनाथ ! कथितास्तव । नोक्ता ये तेऽपि भद्रस्य विज्ञेयाः समलक्षणाः । मृगस्य साम्प्रतं वक्ष्ये प्रदेशान् लक्षणान्वितान् । त्र्यङ्गुलं पुष्करं तस्य त्र्यङ्गुले स्रोतसी तथा । अङ्गुलानि च चत्वारि कीर्त्तितास्तस्य चाङ्गुलाः । तनुः करः त्र्यरत्निःस्यादानाहे सार्द्धरत्निकः । बाहित्यात् पुष्करं यावत्स्थानं सद्भिरुदाहृतम् । तथा तनुतरौ दन्तौ दैर्घ्ये सार्द्धद्व्यरत्निकौ । ह्रस्वौ च मस्तकौ स्यातान्तयोः सप्तदशाङ्गुलौ । प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशाङ्गुलम् । द्व्यङ्गुलं चिबुकं तस्मादधरस्तु षडङ्गुलः । अष्टादशाङ्गुलानाहे हनुकर्णौ तु षडङ्गुले । स्यातामङ्गुलविंशत्यौ कपोलौ निम्नमध्यमौ । कटौ द्व्यङ्गुमानौ तु निर्याणे चतुरङ्गुले । नेत्रे चापि तथा स्यातान्निष्प्रभे स्थूलतारके । नातिव्यक्तं समांसं स्याद्वातकुम्भं दशाङ्गुलम् । गर्त्ताकारश्च निम्नं च कटकुम्भं तथैव तु । अष्टाङ्गुलान्तरं कुम्भ आयामे षोड़शाङ्गुलः । विंशत्यङ्गुलकौ कर्णौ स्तब्धौ रूक्षौ च वर्त्तुलौ । षस्रवत्यङ्गुलानाहा आयामे षोड़शाङ्गुला । ग्रीवा मृगस्य विज्ञेया कराऌमासनं भवेत् । सार्द्धद्व्यरत्निकायामः कुब्जतुङ्गोऽतिमात्रया । वंशो मृगस्य विज्ञेयो निम्नतल्पनिभप्रभः । स्थूलास्थि विषमं निम्नं पुच्छमध्यर्द्धरत्निकम् । आसनेन समं चैव मृगस्य पश्चिमासनम् । पञ्चाङ्गुलस्तु विज्ञेयः पेचको गुदसंस्तृतः । कचाप्यल्पसमाकीर्णः स्थूलो ह्रस्वश्च बालधिः । अपरापादपार्ष्णिभ्यां हस्तमात्रपदच्छ्रयः । दीर्घतनुरुहच्छन्नोद्विषप्तत्यङ्गुलायतः । तत्प्रमाणे तथा गात्रे चिपिटे चापि निष्प्रभे । चरणाश्च गतच्छायैश्चतुर्स्त्रिद्व्यङ्गुलैर्नखैः । संयुक्ताःस्फुटिता निम्ना माने नाष्टादशाङ्गुलाः । एतदुद्देशमात्रेण कथितं मृगलक्षणम् । अतःपरं प्रवक्ष्यामि तेषां बलपरीक्षणम् । गजा न बलहीनेन सुरूपेणापि शोभनाः गुणेष्वपि बलं श्रेष्ठं तत् परीक्षेत पण्डितः । शरीरान्तर्गतः प्राणो बलशब्देन कीर्त्यते । क्रियते वारणस्याथ तस्योपायैः परीक्षणम् । जाम्बूनदस्य ताम्रस्य पलानां रजतस्य वा । अष्टादशसहस्राणि युक्त्या संस्थाप्य वेगवान् । दशयोजनमध्वानं गच्छति श्रमवर्जितः । यो गजो गजमध्ये तु स उत्तमबलः स्मृतः । यश्चतुर्दशसाहस्रभारमादाय गच्छति । सप्तयोजनमध्वानं स मध्यमबलो मतः । दशसाहस्रिकं भारं गृहीत्वा पञ्चयोजनम् । अध्वानं यो हि संयाति स हीनबल उच्यते । सत्रिभागद्विहस्तेन परिणाहेन संयुतम् । चतुर्हस्तनिखातं तु यो भिनत्त्युत्तमो हि सः । अथ वोत्पाटयेद्वापि बलेन महता युतः । सार्द्धत्रिहस्तखातन्तु सप्तहस्तोच्छ्रितं तथा । पञ्चाशदङ्गुलीकेन परिणाहेन संयुतम् । भिनत्ति यो गजः शीघ्रं क्षिपत्युद्धृत्य वा पुनः । स गजानान्तु सर्वेषां मध्ये मध्यबलो मतः । हस्तत्रयनिखातन्तु षड्हस्तोच्छ्रयमेव वा । युक्तं स्थूलतया चैव पूर्वसंस्थार्द्धमात्रया । भिनत्ति हेलया यस्तु उत्खातं वा करोति वा । स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते । गुरुत्वं च यतः श्रेष्ठं गुरुत्वादधिकं बलम् । बलादभ्यधिकं सत्त्वं तस्मात्सत्त्वं निरूपयेत् । शुद्धस्फटिकसङ्काशं सत्त्वं हृदि शरीरिणाम् । दुर्लक्ष्यं विद्यते सम्यगुपायैस्तद्धि लक्षयेत् । सुप्रशस्ते दिने लग्ने गजो गैरिकमण्डितः । कर्णचामरशङ्खादिसर्वाभरणभूषितः । पादान्दोलनसंजातघण्टारवनिभस्वनः । आरोहककरास्फालकृतोत्साहोन्नताननः । अत्यन्तं ढौकयेच्छीघ्रं पार्श्वकोलाहलाकुलः । वेगोत्थानकृतास्फोटदन्तसंघट्टमर्दनैः । क्षतां कामपि न हस्तस्य वेदनां यो न मन्यते । यो हि मदैःकृतास्फालैः स्वकटं भर्त्तुमिच्छति । नापसर्पति भीत्या नो प्रतियातं रणात् क्वचित् । कण्ठगर्जितनादेन परिपूरितदिङ्मुखः । निवर्त्त्यते च दुःखेन स भवेत् सत्त्ववान् गजः । पदात्यश्वसमूहं वा गजमालातिभीषणम् । रागोत्थानसमुद्भूतगम्भीरकलहाकुलम् । उत्थाय समरे गच्छेद्रोषरञ्जितलोचनः । दन्तदारणरागेण प्रतिनागकृतेक्षणः । प्रसारितैरतिस्तब्धैर्निःशङ्कं कर्णपल्लवैः । यो गच्छत्यतिवेगेन स भवेत् सत्त्ववान्-

गजः । शार्दूलाकृतिसत्वानां त्रासवर्जितमानसः। कृतकं च तथा नागं योभिनत्त्युत्तमो हि सः । दावानलशिखिश्रेणीशब्दसंत्रासवर्जितः । वनेषु विचरत्येष स सत्वसहितो गजः । कृतशङ्कावशाद्यस्तु न वारोहिणमीयते । सङ्कुचन् मस्तकं दीनोमन्दान्मन्दतरो भवेत् । आलोकयति पार्श्वानि चीत्कारकरणप्रियः । आलोकयति शोभ्भ्यां लोचनाभ्याम्प्रतिद्विपम् । पदात्यश्वसमूहं वा ज्वलन्तमिव मन्यते । अधमस्तु सुविज्ञेयो गज सः श्रमवर्जितः। यस्तु संघटते मन्दं घटितश्चापसर्पति । तथापसर्प्य वेगेन दन्ताघातं प्रयोजयेत् । किञ्चित्तिर्य्यङ्मुखीभूत्वा कृतचीत्कारनिस्वनः । कुरुते दन्तसंघातम् स विज्ञेयोऽधमोगजः" ।

प्रथमादिपञ्चसुदशासु मदविकारभेदसुक्त्वाह तत्रैव ।

"तटतरुभवनोन्मूलनरतस्तु पञ्चाङ्गजो भवति । करवदनाच्चिकटस्थल गलन्मदसलिलसिक्तभूमितलः । संग्रामे रिपुभरकरविसृष्टशरनिकरशल्यसहः । करवीरपुष्पलोहितलोचनः स चारुदारुणाकारः । प्रतिनागसंप्रदारणप्रकृतिरंशलस्तु सप्तम्याम् । न शृणोति नैव पश्यति च न भयञ्जानाति सर्वसत्वकृतम् । यश्च घनास्फालितं सुखरितं चाननं पतति कारयन् । न सहन्ते तस्य गन्धं सङ्कोचितगात्रकुञ्चकरकटाः करिणः । मर्द्दितनिजबला विमुक्तनादाः प्रणश्यन्ति । न तथा शङ्खाभरणैर्न चामरैर्नीलमालाभिः । भवति यथा मदधारैर्मुखस्य शोभा गजेन्द्राणाम् । क्रमविरहिता भवति हि षष्ठी वा पञ्चमी चतुर्थी वा । दीनावस्था करिणां सत्वहतां मदविशेषेण । अतिहृष्टमदविकारे हृष्यन्ति शिशुमदेऽपि मातङ्गाः । सत्वातिरेकयुक्तावलस्य शोभां परां प्राप्ताः" । स्थलभेदे न मदोद्गमफलं तत्रैवाह ।"कुरुते नरपतितुष्टिं दक्षिणगण्डस्थलोद्गतन्दानम् । रोमोद्गतं च यातुर्विशेषसुखदं सदा भवति । उभयकटस्थलसमनिर्गतं च विषयस्य वृद्धिकरम् । शिशिरसुगन्धिपरिमलं सुखप्रदं जायते भर्त्तुः । माङ्गल्यं श्रीजननं सौभाग्यकरं सत्वजननं च । माद्यन्ति यत्र देशे दशाविपाकेन बलकृतानन्दाः । करिणस्तस्मिन् राजा वर्द्धितवंशः सुखं वसति । कतकबकुलैलापरिमलश्च सुखदोमदो भवति । मूत्रपुरीषस्वेदास्रकफरसोनादितीव्रगन्धधरः । अशुभकरोऽसौ नरपतियातृणाञ्जायते मदः । जायन्ते ये भावा राजन् ! मदखण्डमण्डितमुखस्य । नागस्य मदविशेषाख्यांस्तान् प्रवक्ष्यामि । चालयति दुर्गन्धमिवाघ्राय पुष्करं क्षिपति प्रेरयति । वेढिजिह्वाग्रेण सृक्कणी विघटितोष्ठपुटः । संपीड्य पुष्कराग्रेण चाङ्गुलिं निःश्वसञ्चाधोवदनः । तिर्य्यक्प्रेक्षी भवति मीलिताक्षः क्षणं स्थित्वा । तिर्य्यक् चालितवदनमङ्गुल्या पुष्करप्रकम्पेन । किञ्चित्समुन्नतास्यः कर्णकण्डूयनं कुरुते । किञ्चिच्च दर्शयित्वा मेढ्ं नाशयति कोशकृन्मूलम् । हृष्टः क्रीड़ति परिवर्त्तिताननो बन्धनस्तम्भ कृतमत्सरः । प्रधावति संवेष्ट्य करं विषाणमुद्याम्य गर्जति सलिलपूरितजलधरगम्भीरनादेन । उन्नामिताग्रहस्तः स्वच्छन्दकृच्छ्रतिकापि । गुरुमक्षिकश्च भवति वनतरुगहनोन्मूलनातुरतः। वागङ्कुशसुखजातं बाधनं न सहते ह्यभिन्नसत्वोयः । तिर्य्यग्विकलत्वाच्च तथा सगजो गुरुमक्षिकोज्ञेयः । रमते च पांशुविकरणकर्दमावगाहाद्यैः । एवंविधस्वभावो मदभेदवशाद्गजो भवति । यो यस्मिन्नेव ऋतौ म्लाति मदमातङ्गजः सुखदम् । स च तस्मिन्नेव पुनः प्रभिद्यते दानयुक्तश्च । इति मदवृद्धिविशेषाः कथितास्तव भूतलेश ! तत्त्वेन । परिवर्त्तते मदोयैर्हेतुभिरशुभैस्तु तान्वक्ष्ये । प्रतिवारणाभियानाद्दूराध्वगमनात्क्षुभोजनाच्चापि । बन्धनदोषाच्च तथा तृष्णाक्षुत्पीड़नाच्चापि । शार्दूलादित्रासाद्दावानलोल्काशनिप्रपतनाच्च । (अशनिरत्न विद्युत्)। नश्यति मदोगजानां शीघ्रं वत्स विभ्रतश्च तथा । मातापितृजैर्दोषैर्मन्दमदानन्दवर्जिताश्च तथा । जायन्ते द्विरदा यैर्यथा तथा साम्प्रतं वक्ष्यामि । मन्दमदेन हि करिणा जातः किञ्चिन्मदोगजो भवति। मदविरहितेन तथा जनितोमदविवर्जितोऽस्त्येव । समदेन तु यो जातो गजो गजेन्द्रेण भवति तस्य मदः । एवं मदप्रकारा मातङ्गानां समुद्दिष्टाः । शृणु साम्प्रतं नरेश्वर ! मदापसरणोद्भवानि चिह्नानि । यानि भवन्ति गजानां मन्दमृदुमदविगलितसमुदयानाम् । रुक्षच्छायायुक्तोनिम्नोचितगण्डस्थलगतश्रीः। कुप्यति येभ्यः शङ्काङ्करोति तेभ्योऽपि सत्वस्थः। गण्डस्थलेन जिघ्रति करेणुकां स्पृशति नैव हस्तेन । मूत्रपुरीषाणि च नो जिघ्रति वारणकृतानि यातुर्वा शनैर्गच्छति । सततं परिमृष्टदानराजिपरीकीर्णकटोहस्तेनातीव सङ्घर्षणं कुरुते । मुहुरभिनन्दति निद्रामलसो मनसा न तुष्टिमुपयाति । लिङ्गान्येतानि करिणो मदेन मुच्यमानस्य जायन्ते । प्रतिकुञ्जरयुद्धकृतो बलहर्षदशावयोभ्यस्त्वशुभः । भवति मदोनागानां तापादिसमुद्भवश्च शुभः"। "रूपवान्मदसम्पन्नोविन्ध्यशैलसमप्रभः। जायते सत्वहीनस्तु कुञ्जरः केन हेतुना। केन वा रूपहीनोऽपि मदोच्छ्रयविवर्जितः । सत्ववान्

जायते नागो एतदाख्यातुमर्हसि” इति नहुषपृष्टो बृहस्पतिरुवाच । “यथा जातकयोगेन जन्तूनां च शुभाशुभम् । तथा बन्धनकालोत्थमङ्गजानामपि जायते । सुलग्नावस्थितैः सौम्यग्रहैः पीड़ाविवर्ज्जितैः । बन्धनं यस्य जायेत स भवेत् सत्ववान् गजः । क्षीणचन्द्रेषु गृह्यन्ते ये गजाः क्रूरदृष्टिभिः । ये चालोकितनक्षत्रास्ते भवन्ति भयाकुलाः” । उक्तञ्च शम्भुना “मृगजातयोऽपि हि शूरा भवन्ति मधुपिङ्गललोचनाः स्निग्धाः । वृषसिंहमीनवृश्चिकलग्नेषु स्वीकृताः करिणः” । पुनर्नहुषप्रश्ने गुरोः प्रत्युक्तिस्तत्रैव । “राजन् पञ्चविधं चैव गजानां विदितं मतम् । अत्यर्थं प्रथमं ज्ञेयं प्रत्यर्थं च तथापरम् । अन्वर्थं चैव गम्भीरमुत्तानं पञ्चमं भवेत् । प्रतोदाङ्कुशदण्डाद्यैर्विद्यादुद्वेजितानि यः । तीव्रमङ्कुचितस्पृष्टः स स्यादत्यर्थवेदिता । स्तोकं बहु बहु स्तोकं क्षतं मन्येत योगजः । वागङ्कुशादिभिर्नित्यं स हि प्रत्यर्थवेदिता । जानात्यङ्कुशतोत्राद्यैर्यथा तत्तथैव हि । क्षतञ्चायथयैर्ज्ञोऽन्वर्थज्ञः स गजो भवेत् । अङ्कुशादिव्रणान् राजन्! यश्चिरेणावगच्छति । तीव्रानपि स गम्भीरवेदी भवति वारणः । रोमृणामग्रं तृणेनापि स्पृष्टं वेत्ति तु यो गजः । उत्तानवेदिनं तन्तु गजं विद्धि महाभुज ! सर्वाणि वेदितव्यानि भद्रादीनां भवन्ति वै । प्रकृतिस्थस्य सततं भद्रस्यान्वर्थवेदिता । गम्भीरवेदिता चापि मन्दस्यैव प्रकीर्त्तिता । उत्तानवेदिता नित्यं मृगस्यैव भवेन्नृप ! । वेदित्वं गजजातीनां तिसृणामपि जायते । साम्प्रतञ्च यथाशास्त्रं कथ्यते वेगलक्षणम् । तिसृणामपि जातीनामुत्तमाधममध्यमम् । न चाल्पं न च दृष्टं द्विपञ्चपदसंस्थितम् । गजोत्थानसहोत्थानं नरं प्राप्नोति येन तु । रयाविष्टेन मनसा स वेगउत्तमोमतः । (द्विपञ्चपदसंस्थितं दशपदस्थितं गजोत्थानसहोत्थानं गजधावनसमसमधाविनम् ) येन वेगेन गृह्णाति नरं सप्तपदान्तरम् । पदानां शतमात्रन्तु स मध्यमजवो भवेत् । येन पञ्चपदस्थं हि नरं गृह्णाति नोदितः । पदानान्तु शतं सार्द्धं स हीनोजव उच्यते । शतद्वयं वा धनुषां गच्छेदुन्नमिताननः । द्वात्रिंशता च मात्राभिः स उत्तमजवो भवेत् । पञ्चाशता च मात्राभिः यायाद्यस्तु शतद्वयम् । स मध्यमोऽधमोज्ञेयो मात्राणाञ्च शतद्वयात् । एवं परीक्ष्यते राजन् ! वेगो वीथिषु दन्तिनाम् । अतःपरं प्रवक्ष्यामि गजस्य गुणलक्षणम्” ।

तत्र कल्याणशीलः “भाराहितोवा तृषितः क्षीणः श्रान्तोवुभुक्षितः । रात्रौ वा दिवसे वापि निर्विकारस्तु यो भवेत् । कल्याणशीलः स ज्ञेयो समस्तगजलक्षणैः । विकारं कुरुते यस्तु पीड्यमानःक्षुधादिभिः । तमकल्याणिनं राजन् गजन्दुष्टं प्रकल्पयेत् । कोपोऽपि द्विविधोज्ञेयः शिशुश्चैवाशिशुस्तथा । द्विविधस्यापि राजेन्द्र ! यथावच्छृणु लक्षणम् । उद्वेजितोऽपि कालेन कोपं बध्नाति निर्भरम् । क्षिप्रं गृह्णाति च क्रोधं दुर्निवारं सुदुःसहम् । शिशुक्रोधः स विज्ञेयो गजलक्षणकोविदैः । वार्य्यमाणोऽपि यत्नेन न शमं याति मुह्यति । स ज्ञेयस्त्वशिशुक्रोधो राजन् ! स हि रणप्रियः । साम्प्रतं चैव वक्ष्येऽहमायुर्लक्षणमुत्तमम् । आभ्यन्तरं च बाह्यञ्च लक्षणं द्विविधं स्मृतम् । आभ्यन्तरं योगसाध्यं बाह्यं किञ्चिच्च लक्ष्यते । तेनान्तरं परित्यज्य बाह्यं लक्षणमुत्तमम् । क्षेत्रसत्वसमायोगा । भवन्ति द्वादशैव हि । एकं हस्तगतं क्षेत्रं द्वितीयं वदनाश्रितम् । तृतीयञ्च विषाणस्थञ्चतुर्थं शिरसिस्थितम् । पञ्चमं नयनस्थं च षष्ठं कर्णाश्रितं भवेत् । कण्ठस्थं सप्तमञ्चैव अष्टमङ्गात्रसंस्थितम् । नवमं चरणे ज्ञेयं शेषाङ्गस्थं द्विपञ्चमम् । एकादशञ्च कान्तिस्थं द्वादशं सत्वसंस्थितम् । एवं द्वादश क्षेत्राणि मातङ्गानां भवन्ति हि । द्वादशैव दशाज्ञेयाः शेषाङ्गेष्वभिलक्षिताः । विंशोत्तरं वर्षशतम्भद्रस्यायुः प्रकीर्त्तितम् । अब्दान्यशीतिर्मन्दस्य चत्वारिंशत् मृगस्य च । मिश्रस्य चायुषः संख्या जातिभावेन जायते । प्रदेशज्ञानतत्त्वज्ञोजातिं समुपलक्षयेत् । सर्व्वक्षेत्रैः सुसंपूर्णैः संपूर्णायुर्गजो भवेत् । हीनैश्च हीयते चायुर्यथावदभिधीयते । दशाब्दानां क्षयं कुर्य्याद्धस्तलक्षणवर्जितः । विंशत्यब्दविनाशश्च हीने क्षेत्रद्वये भवेत् । क्षेत्रत्रयावहीने च त्रिंशदब्दपरिक्षयः । चत्वारिंशत्समाहानिर्हीने क्षेत्रचतुष्टये । (समा संवत्सरः) । पञ्चाशदब्दाहीयन्ते हीने तु क्षेत्रपञ्चके । षट्क्षेत्रहीनतायान्तु षष्टिवर्षविनाशनम् । सप्तत्यब्दविनाशाय सप्तक्षेत्रविहीनता ॥ अशीतिरष्टभिर्हीने वर्षाणाञ्च विनश्यति । नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं हि प्रयाति । दशभिश्च तथा हीनैर्नश्यत्यब्दशतं ध्रुवम् । दशोत्तरं चाब्दशतं हीना छाया विनाशयेत् । विंशोत्तरं चाब्दशतं हीने सत्वे विनश्यति । एवं दशाब्दनाशं च क्षेत्रं कुर्य्यादलक्षणम् । एवमायुःक्षयं विद्यात् गजस्य गजकोविदः । सामान्यलक्षणं ह्येतत् जीवितस्य परीक्षणे । विशेषलक्षणं यावद् यद्दलक्षणजातितः । एवमुद्देशमात्रेण गजायुर्लक्षणं तव । कथितं साम्प्रतं राजन् ! दोषघ्नं वच्मि लक्षणम् । पादानां लक्षणं सम्यक् दन्तदोषं प्रणाश-

येत् । दन्तयोर्लक्षणं हन्ति दोषान् वाहित्थसंश्रितान् ।
वाहित्थलक्षणैः सम्यक् नेत्रदोषक्षयो भवेत् । नेत्र-
योर्लक्षणं हन्ति दोषांस्तालुसमाश्रितान् । सृक्कदोषवि-
नाशश्च क्रियते तालुलक्षणैः । सृक्काणां लक्षणं कुर्य्यात्-
सगद्दोषनाशनम् । कपोलकटदोषघ्नाः सगदस्थागुणा
नृप ! । निर्य्याणवातकुम्भानान्दोषघ्नः करयोर्गुणः ।
कुम्भदोषविनाशाय तयोरेव गुणो भवेत् । कर्ण-
दोषविनाशस्तु क्रियते कुम्भलक्षणैः । कण्ठदोषविना-
शाय कर्णलक्षणमेव हि । आसनस्य हि ये दोषास्तान्
हरेत्कर्णजोगुणः । वंशदोषक्षयकर आसनस्य गुणो भवेत् ।
गुणाघ्नन्ति हि वंशस्य दोषान् तत्स्थलसंश्रितान् ।
पश्चिमासनदोषघ्नं लक्षणं तत्स्थलश्रितम् । कुक्षिपेचक-
दोषघ्नं पश्चिमासनलक्षणम् । गुणाः पेचककुक्षिस्थाः पु-
च्छदोषविनाशनाः । मेढ्रदोषक्षयं कुर्य्यात् पुच्छलक्षणमेव
हि । मेहनस्य गुणा हन्ति दोषांश्चैवापराश्रितान् । अण्ड-
कोषगतं दोषमपरालक्षणं हरेत् । नाभिदोषक्षयं कुर्याद-
ण्डकोशस्य लक्षणम् । नाभेर्गुणैश्च हन्यन्ते दोषास्तनस-
माश्रिताः । उरोमणिगतान् दोषान् नाशयेत् स्तनल-
क्षणम् । चिबुकस्य हरेद्दोषान् उरोमणिगतोगुणः । यथा
दोषक्षयो राजन् ! लक्षणैः क्रियते शुभैः । दोषातिरेकोऽपि
तथा प्रदेशगुणनाशकः । प्रदेशोऽनन्तरस्यैव प्रदेशस्य गुणा-
न्वितः । कुरुते दोषनाशं हि स दोषोगुणनाशनः । करकु-
म्भविषाणाक्षिकर्णलक्षणसंयुतः । सर्व्वैरेवाशुभैरन्यैर्लक्षणै-
श्चाशुभोगजः । स्थूलं चन्द्रांशुशुभ्रं स्याद्वक्रं च ज्वलनप्रभम् ।
वज्रं काञ्चनसङ्काशङ्कालदण्डःसुपिङ्गलः । एतेषां च समा-
योगाद्दन्तानां मधुपिङ्गता । यतो गजविषाणानामतो
मधुनिभाः शुभाः । भद्रजातेर्गजस्यैतन्मन्दस्य च मृगस्य च ।
घृतपीयूषकुन्देन्दुकेतकीच्छविपञ्चकम् । एवं जातित्रयस्यापि
सामान्यं शोभनं मतम् । कपोतधूमभस्मास्थिसर्पच्छत्रक-
सन्निभाः दन्तयोस्त्वशुभा राजन् ! छाया पञ्चविधा अपि ।
अध्यर्द्धारत्निकं राजन् ; प्रमाणं दन्तयोः शुभम् ।

अत ऊर्द्ध्वं प्रवक्ष्यामि गजानां वर्णलक्षणम् । आहारस्य
विशेषेण वातपित्तकफैस्तथा । देशलग्नगुणैश्चैव वीजयोनि
वशेन । महालोकननक्षत्रलग्नराशिवशेन च । पूर्व्वकर्म्म-
वशाच्चापि धातूनाञ्च विपर्य्ययात् । भवन्ति कारणैरेभिर्वर्णा-
नानाविधा नृप ! । दिव्यसत्वाः शुभैर्भेदैर्विविधास्ते भवन्ति
हि । सिन्दूरशङ्खवैदूर्य्यविद्युज्जाम्बूनदप्रभाः । इन्द्रनीलस-
मानाभा भवन्ति शुभकान्तयः । अतिश्वेताश्च रक्ताश्च शुकव-
र्हिणसप्रभाः । एते देवगजाः सर्व्वे भूतले न भवन्ति हि ।
अतिश्वेताश्च रक्ताश्च शुकवर्हिणसप्रभाः । दैवयोगाद्वने प्राच्ये
कचिदेव भवन्ति हि । वन्दनीयश्च पूज्योऽसौ नाशौ प्राह्यो-
नराधिपैः । मङ्गाराङ्गारभस्मास्थिपङ्कमाञ्जिष्ठसन्निभाः । म्ला-
नपुष्पसवर्णाश्च गजास्ते तेऽतिनिन्दिताः । एवं वर्णविशेषास्तु
कथितास्तव सुव्रत ! । गजमेकादशगुणं वक्ष्यमाणं निबोध
मे । मधुसन्निभदन्तश्च श्यामोमधुनिभेक्षणः । उदरेपाण्डु
वर्णश्च वक्त्रे च कमलप्रभः । द्विरेफसमबालश्च कुन्देन्दुसदृ-
शैर्नखैः । स्थूलतारोमयुक्तश्च शेषेष्वङ्गेषु पीतकः । विचित्रञ्च
मुखं यस्य रक्तैःश्वेतैश्च विन्दुभिः । स नागोगजयूथानां
मध्ये राजाऽत्र जायते । तं प्राप्य नृपतिर्भुङ्क्ते सागरान्तं
महीतलम् । नीलसवर्णसंस्थानः स गजोयूथनायकः ।
मुखे मदे च हस्ते च कर्णोदरशिरस्सु यः । केशैः शुभैश्च
वलिभिर्विन्दुभिः परिमण्डलैः । सवर्णोयो भवेद्दन्ती
कैलासः सोऽभिधीयते । अतःपरं प्रवक्ष्यामि निःश्वासस्य तु
लक्षणम् । निःश्वासोद्विविधोज्ञेयः शुभश्चैवाशुभस्तथा ।
शुभः सुरभिगन्धः स्यात् पूतिगन्धोऽशुभोमतः । विशेषेण
तयोश्चैव लक्षणं भूप ! कीर्त्त्यते । सूक्ष्मता दीर्घता चैव समता
च सुगन्धिता । सौकुमार्य्यं मृदुत्वं च निश्वासस्य तु षड्-
गुणाः । स्थूलता ह्रस्वता चैव दुर्गन्धत्वं तथोष्णता । पा-
रुष्यं विषमत्वञ्च दोषाश्चापि भवन्ति षट् । दशा
रत्निप्रमाणं च रेणुकं पित्तलक्षणम् । यो निश्वसिति
दीर्घं च स दीर्घायुर्गजो मतः । अतःपरं प्रवक्ष्यामि
गजालोकित लक्षणम् । स्निग्धं स्थिरं च सौम्यं च वारि-
जोत्फुल्लतारकम् । सलक्ष्यं प्रतिनागं तु प्रेक्षितं शुभका-
रणम् । उद्विग्नञ्चञ्चलं दीनमविकाशिततारकम् । ऊर्द्ध्वाधः
पार्श्वदृष्टञ्च निर्लक्षं निन्दितं भवेत् । कचानां साम्प्रतं भे-
दान् वक्ष्यमाणान्निबोध मे नेत्रयोः पुटपालिस्थाः कचाः
शुभफलाः स्मृताः । संख्या तस्यैव मानन्तु रोमणां चैव
प्रकीर्त्तितम् । देहच्छायासवर्णत्वं मृदुत्वं च तथा परम् ।
अनाविलत्वं घनता नम्रा च स्फुटिताग्रता । अंशुमत्ता च
सूक्ष्मत्वं रोमणां सप्त गुणा स्मृताः । दोषाश्च सप्तसंख्याः
स्युर्गुणानां च विपर्य्ययात् । शुभानि शुभकर्त्तॄणि दुःख-
दान्यशुभानि च । अतःपरं प्रवक्ष्यामि लक्षणं पक्ष्म-
संश्रयम् । बाह्योन्नतानि सूक्ष्माणि दीर्घाण्यायतनानि च ।
मृदूनि पिङ्गवर्णानि पक्ष्माणि करिणः सदा । स्निग्ध
च्छायानि कृष्णानि समानि च दृढानि च । अयनानि
संक्षिप्ताणि पक्ष्माण्यतिशुभानि च । गजानां स्वामिनः

सौख्यं कुर्व्वन्ति रमणीयताम् । दृढाः स्निग्धायताश्चाश्च सुदन्ताश्च च्छदप्रभाः । तालवृन्तसमाकारा बाला भर्त्तुर्जय प्रदाः । शुनःपुच्छसमा ह्रस्वाः कपिलाः स्फुटितास्तथा । प्रनष्टातिशयोपेताः सुदन्तास्त्वतिनिन्दिताः । भर्त्तुरारोहिगजानान्तु नित्योद्वेगकरास्तु ते । अतःपरं प्रवक्ष्यामि केशानामपि लक्षणम् । अभिन्ना ऋजवः स्निग्धा घना मधुकरप्रभाः । केशा वारणनाथस्य क्षेमवृद्धिकरा मताः । रूक्षास्तु निष्ठुराः पिङ्गाः स्फुटिताश्च जुगुप्सिताः । कुर्व्वन्ति दन्तिनां नित्यं स्वस्य नाथस्य चाशुभम् । पक्ष्मवालकेशरोमणां लक्षणं कथितं मया । फणिमार्जारमण्डूकस्टगालैश्च समप्रभम् । वानरस्य समं चैव मुखं नागस्य निन्दितम् । स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च । आपूर्णमेवरूपाणि पूजितानि मुखानि वै । मदहीनं क्षयं ह्रस्वं बाह्निश्वनिःप्रभं तथा । वराहलोचनाक्रान्तमदृष्टचिवुकं तथा । ललाटतटपर्य्यन्तगर्त्ताकृतिभिरन्वितम् । सगदं हीनतायुक्तं मुखं नागस्य निन्दितम् । मुखस्य लक्षणं सम्यक् कथितं तव सुव्रत ! । अतःपरं प्रवक्ष्यामि मातङ्गगतिलक्षणम् । समा च लघुपादा च वेगेऽप्यतिशुभा मता । दीर्घक्रमा सुखोत्क्षिप्ता गात्रसंवरहारिणी । शुभलक्षणसंयुक्ता पुरुषस्य वकस्य च । मातङ्गवृषसिंहानां गतिस्तुल्या शुभा मता । क्षोभचालितगात्रा या विषमा सुलघुक्रमा । वेगेऽपि मन्दसञ्चाराविशेषान्दोलितासना । मृगस्य शृगालस्य जम्बूकस्य खरस्य च । गमनेन समा या, सा शुभा नो दन्तिनाकृतिः। कथितं तव राजेन्द्र! गजानां गतिलक्षणम्। स्थितानाञ्च यथायोगं साम्प्रतं लक्षणं शृणु । पञ्चस्थितसप्तस्थित नवस्थित द्वादशस्थिताश्चैव । पुण्यवतां जायन्ते राज्ञां गिरिसन्निभाः करिणः । लक्षणसहितैः स्निग्धैः करकुम्भविषाणकर्णनयनैश्च । संयुक्तो भवति गजो वसुदः पञ्चस्थितो नागः। (वसुदःधनदः) परिणाहायामोच्छ्रयबलविक्रमधैर्य्यकान्तिसम्पन्नः । भर्त्तुः प्रतापजननो ज्ञेयः सप्तस्थितो हस्ती । उत्साहवेगसाहसमदसत्वगुरुत्वदक्षतायुक्तः । करदन्तकर्मसु कुशलो नवस्थितः करी भवति। वृद्धिर्मेधा सत्वं यत्नःकुम्भौ तथाऽक्षिणी हृदयम् । रोमाणि च्छविशादाः तथासनं पृष्ठवंशश्च । द्वादश चैतानि सदा स्थितानि दृश्यन्ते यस्य नागस्य । स द्वादशस्थितोवै भवति गजः सर्व्वसौख्यकरः । सञ्चारस्थितभेदाः कथिताः गुणसंश्रया गजेन्द्राणाम् । दिव्याधमसत्वानां लक्षणमिह साम्प्रतं वक्ष्ये । निहतद्विपदचतुष्पदकुणपाद्य स्पृशति च न यो जिघ्राति । न च जिघ्रति भूतादीन् स वारणोदिव्यसत्वस्तु । दृष्टञ्च योऽत्ति मांसं सत्वानां सर्व्वं तु लोभेन। जिघ्रति मूत्रपुरीषाणि पिशाचसत्वः स विज्ञेयः। एवं सत्वपरीक्षा क्रियते नरनाथ ! वारणेन्द्राणाम् । स्वरलक्षणमिदानीमशुभं शुभञ्च वक्ष्यामि । स्थानान्यष्टौ नृपते ! भवन्ति शब्दस्य वारणेन्द्राणाम् । ताल्वोष्ठशिरउरःकरजिह्वामूलं गलकपोलौ च । गम्भीरसौम्यहृष्टास्तथाप्रमोरितास्तथा स्निग्धाः। नादाः शुभाःनराधिप ! षडेव कथिता गजेन्द्राणाम् । चत्वारस्त्वशुभा रौद्राभयशोकसङ्गमोत्पन्नाः। एवं शुभाशुभाश्च दशप्रकाराःस्वरा ज्ञेयाः । अन्येऽपि गलवक्त्रगामिलास्फालनोद्भवा बहवः । शब्दा भवन्ति करिणां शुभाशुभं न तैर्भवति । निम्नोचितचिवुकायितविरुक्षितकूजितखरोष्ट्रनादनिभाः। वायसजम्बूककपिकाष्ठभङ्गसदृशारवास्त्वशुभाः । ज्ञेयानि शुभानि सदा मृदङ्गजीमूतदुन्दुभिनिभानि । पातायितगर्जितहसितानि वृंहितानि नागानाम् । पातायितञ्च ताल्वोष्ठसम्भवं गर्जितकं चैव । जिह्वासमुद्भवं च फेनायितमित्यभिख्यातम् । हसितं कपोलजनितं पुष्करविवरोद्भवञ्च नागानाम् । भवति धनधान्यवाहनभूलाभकरं नरेन्द्रस्य । हस्तेन मृदङ्गरवं तु कर्णाभ्यां दुन्दुभिस्वनञ्चैव । दर्दुररवं तु मेचकेन करोति योऽसौ जयकरः । सर्वस्थानसमुत्था शब्दा नरनाथ ! वारणेन्द्राणाम् । आचार्य्यैः सर्व्वैर्वृंहितसंज्ञाश्च रवाः शुभा ज्ञेयाः । एते च जयपराजयकथनसमर्था भवन्ति भूपानाम् । गर्हितशुभप्रदेशस्थानाङ्गपरिवर्ज्जिता नादाः । शुष्कलवणकाष्ठकण्टकवल्मीकास्थिश्मशानदुष्टाश्च । पाषाणाङ्गारादिषु भूमिषु यदि संस्थिताः करिणः । वृंहन्ति हीनलक्षणमेतङ्कर्त्तुस्तदाऽसुखं भवति । प्रभूतमृदङ्गरवं तु यदि वृंहन्त्यानन्दपूरिताः करिणः । प्रस्थानं भवति तदा नराधिपस्य विजयस्तदा राजन् । ! सभामध्ये च यदा वृंहन्ति शार्दूलवत् गजा हृष्टाः । भवति ससैन्यस्य तदा विजयः संख्ये नरेन्द्रस्य । (संख्यं संग्रामः) कलहंसनाद मधुरं किञ्चिदिशोत्क्षिप्तपुष्करस्तु यदा । वृंहति सदा च हस्ती तदापि जयोभवेद्भर्त्तुः। मुखविवरकपोलगतं वृंहत्यसकृत् गजो यदा हृष्टः । मधुरङ्गजहसितञ्च जयप्रदं भवति भूपानाम् । त्रीन् वारान् क्रौञ्चरवं हंसरवं वृंहितं यदा कुरुते । एतदपि नागहसितञ्जयप्रदम्भवति भूपानाम् । गर्जति घनवत् सततं यदि वारणः प्रहृष्टमनाः मुखरन्ध्रनिविष्टकरस्तदाऽरिविजयोऽभवेद्भर्त्तुः । घनद्व

स्टहीतसलिलं सशीत्कारं वृंहितं यदा कुरुते । भवति तदा
वारणनाथस्य भवति शत्रुनाशः खल्वेव । कथितान्येतानि
मया शुभानि गजवृंहितानि नरनाथ ! । अशुभानि च ना-
गानामतःपरं प्रवक्ष्यामि । शङ्काचालितनयनोवराहघुरित-
निःस्वनं कुरुते । तत्प्रतिबलस्य नूनम् तदा क्षयो भवति ।
भूपाल ! वेष्टितभूतलहस्तो नदति यदा धरणिप्रकम्पनाद-
समम् । नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यक्षतः ।
मद्दर्दितखरतरसदृशं निःस्वनं यदि करी कुरुते । जनयति
विजयविनाशात् पुरराष्ट्रपीड़नं च तदा । बलिभुग्निस्वन
सदृशं यदि वा समुत्फाल्य च हस्तम् । वामान्दोलितचर-
णोयदा करी वृंहति सनिःश्वासम् । आलानगतः कुरुते
तदा बध्योयातावैरिभिःपार्श्वैः । एवं प्रकृतिस्थायदि मतङ्गजा
वृंहितानि कुर्वन्ति । आत्यन्तिकानि राज्ञां चैव भवन्ति
नान्यानि" । "यदि रिपुगजाभिमुखो निवार्य्यमाणोऽपि
याति रभसेन । विंशतिपदानि नागस्तत्रापि जयोभवत्येव ।
अमदोऽग्लायाति मदं दुर्गन्धमदश्च सुरभिमदम् । दुष्टगजानां
प्रथमन्तुलक्षणमेवं सकलम् । ह्रस्वतनुर्महिषवदनो हि महा-
शिरास्तब्धकर्णयुगलश्च । नातिस्थूलोऽसितवर्णस्तब्धानि च
गात्रवदनरोमाणि । व्याघ्रः स भवति हस्ती दुष्टात्मा दुष्ट-
शीलश्च । स्थूलाक्षिपाण्डुरूक्षो दीर्घविषाणोनामितमुख-
श्रीः । पृथुपादःश्यावनखो वक्रोहनुपुटदण्डेन । विकृत-
कुक्षिश्चोदरश्च कृष्णोवराहनयनश्च । ज्ञेयोवकीलनामा
ख्यातोऽयं सर्वदोषकरः । अतिह्रस्वापरगात्रो दृढनखः
काकक्षणनयनश्च । स्थूलतराधोमुखदन्तदीनमुखलस्फुटित
वहिर्नखपादः । स्थूलनखःस्थूलपुष्करकरश्च वामन संज्ञो
गजाधमो दुष्टशीलश्च । विषाणे चातिदृढे ह्रस्वे परि-
मण्डलौ तथा कर्णौ । वदनञ्च मांसलं स्यादधोगतस्थूलन-
यनञ्च । समसांसलत्वयुक्तो ह्रस्वो ह्रस्वाङ्गुलिः करो यस्य ।
नाम्ना च विश्वरूपमुख इति ख्यातो दुष्टमातङ्गः । करकर्ण-
शिरोबालधिविषाणगात्राणि यस्य हीनानि । आदग्धभोऽ-
तिवामनाङ्गः पापात्मा स स्वामिनाशकरः । शयनादुत्थाय
बलादुद्धावपि पादौ कर्षति कृच्छ्रेण । प्रत्यूषसि गच्छति
पुनः क्वापि समुपस्थापितमुखश्च । अनिभृतगात्रस्तिष्ठे-
द्विचलति तस्याननं च कर्णाभ्याम् । स ज्ञेयो वातकरः
पापात्मा सर्वपापकरः । यस्य च किलाल्पं मेढ्रं ह्रस्वं
ह्रस्वाङ्गुलिस्तनुर्ह्रस्वा । अतिनिम्नञ्च बाहित्थं कर्णौ च
तनुत्वचौ ह्रस्वौ । गात्रापरञ्च दीर्घं नखाश्च जनितान्तरा-
स्तथा । सर्वाणि च काकाभपक्ष्मरोमाणि च विदग्धानि ।

उदरञ्चाकृष्णं स्यात् ग्रीवा तन्वायता च वक्रा च । वंशिक-
नामा मतोऽसौ दुष्टगजोवर्जनीयश्च । यस्य करालौ दशनौ
स्थूलौ मात्रान्तरन्तथा ह्रस्वम् । मस्तिष्कशुक्लवर्णःकपि-
जम्बुकलोचनोऽतिविक्षततनुः । पापाख्योऽयं हस्ती राज्ञा
हेयः प्रयत्नेन । दिवसमपि यत्र तिष्ठति तं देशं दहति
पावकप्रख्यः । राज्ञा विन्ध्यावने वा मरुराष्ट्रे वा स मो-
क्तव्यः । अतिखरपरिषतनुर्नकुलच्छायस्तनूरुहैस्तब्धैः ।
यो हस्ती पातारं स पातयित्वा विनाशयति । धन्वासदृश
मुखोयः कर्णकषायस्य कर्कशाः रूक्षाः । कृष्णारूक्षान्वयोऽसौ
भर्त्तुर्विपदेव मातङ्गः । रोमभिरधोमुखगतैः काकाक्षो दीर्घवक्त्र
श्च । स्थिरह्रस्वकर्णयुगलः स राक्षसोहस्ती रूपेण । तिर्य्यक्
प्रेक्षणनिरतोदुर्गन्धः काककुम्भवदनश्च । मूत्रपुरीषघ्राणे
सतृष्णको भवति चण्डालः । कुम्भौ यस्य विशालौ विच्छिन्न
स्थूलतारके च नेत्रे । तन्वायतं त्रिकं स्यात् बालधिबाला-
स्तु बहुरूपाः । रक्तौ पेचककोशौ मेढ्रोपरिसंस्थितोदरञ्च
महत् । चलपक्ष्मकस्तु हस्ती स भवति नाम्ना महादुष्टः ।
अङ्गं प्रसार्य्य वदनं विधूय चाधोरणं निपातयति । स जले
स्थले च नागो विवर्जनीयः प्रयत्नेन । ह्रस्वकराङ्गुलिबालतनु
दशनश्चाल्पायामगात्रश्च । मत्कुणजातिः स गजः सुदुष्ट-
शीलश्च दृष्टश्च । कालनखो हरिवर्णोहर्य्यक्षो ह्रस्वबाल
धिश्चैव । बहुपक्ष्मा दुर्गन्धिर्म्महिषनिभतालुकै-
रूक्षैः । अतिपिङ्गलकर्णमूलोरोमशहस्तो वराहनयनश्च ।
तनुनखशिरालकृष्णैर्नखान्तरैर्दुष्टचरणैश्च । विधुरोनाम ग-
जोऽसौ स्वाङ्गैः सर्वत्र कर्कशोजान्वोः । बहुपापकर्म्म-
युक्तो व्यालानामग्रणीश्चायम् । रूक्षोबाहित्थभागो विषमौ
दन्तौ च यस्य नागस्य । धूमशिखेव च्छाया स निन्दितो
वर्जनीयश्च । दन्तौ चातिह्रस्वौ स्थूलौ रूक्षौ च मांसलो
हस्तः । चिबुकं मांसविशुष्कं स्थूलतरे तारके यस्य ।
स्थूलमुखो दुष्टात्मा नासौ सांग्रामिको भवेद्द्विरदः । अति
दुष्टकर्मनिरतो भयालुको वर्जनीयश्च । कृष्णा रूक्षा छाया
वायसजङ्घा च दृश्यते यस्य । भूतोदनञ्च कुरुते निःशङ्कं यः
कराग्रेण । निःशेषं शब्दांश्च करोति यः सहस्तनिष्पेषम् ।
परिहरणीयो राज्ञायाने रणे स महता प्रयत्नेन । अतीव-
विरलपक्ष्मा ध्यानपरः शब्दकरणनिरतश्च । द्विगुणीकृत्य
कराग्रन्तुदति च भूतलन्तु नित्यम् । वामेन च लिखति
महीम्पादेन कुञ्चिताग्रेण । जर्जरविरूपकर्णः पापात्मा
निन्दितो हस्ती । आनाहायामोच्छ्रयसत्वयुक्तो महाशिरा-
लविडः । ह्रस्वाङ्गुलिबालकरो ह्रस्वापरगात्रकर्णश्च ।

एषोऽपि वामनः स्याद्यद्यपि भवेद्युद्धप्रियोऽसौ द्विरदः। राज्ञा तथापि लक्षणविवर्जितो वर्जनीयश्च। स्थूलमुखहस्तकर्णो विहीनजघनापरस्तनूरुश्च। महता मेढ्रेण युतो नष्टमदः कोशमहांश्च। मन्दालोकनिरतो महाशिराः पृथुविषाणनयनश्च। हस्ती नपुंसकोऽसौ विवर्जनीयश्च संग्रामे। अल्पायुषो भवन्ति हि सङ्काशजिह्वोष्ठतालुका नागाः। नरपतिभिस्ते सततं विवर्जनीयाः प्रयत्नेन। आयामपरिहीनं समनाहोच्छ्रायसुखेन नमितम्। उच्छ्रितवक्त्रं कुब्जं विषमकुम्भं कुक्कुरसमानहीनहस्तं च। एवंभूतं तु गजं राजा दूरेण वर्जयेन्मतिमान्। यद्दृश्याति मन्दबुद्धिर्यस्तस्य कुलक्षयो भवति। लक्षणयुक्तोऽपि गजो हानिं यत्येकविंशतिनखश्च। एकोनविंशतिनखः सप्तदशनखश्च यो भवति। षोडश पञ्चदश वा नखान् धत्ते युक्तो वा चतुर्दशभिः। एकादशत्रयोदशनवदशभिर्द्विदशनखैश्चैव। संयुक्तस्त्वशुभकरः सप्ताष्टाभिश्च पापनखैः। द्विरदाश्चाष्टादशनखाः विंशतिनखयुक्ताश्च शुभाः। कुरुते स्वामिविनाशं द्वाविंशतिनखोयश्च। एकोनविंशतिनखो युवराजविनाशं कुरुते। सप्तदशनखस्तु गजो नरपतिपात्रविनाशने समर्थः। षोडशनखमातङ्गो नायकनाशं ध्रुवं कुरुते। पञ्चदशनखश्च योऽसौ सेनापतिनिधनकृद्गजो भवति। कुरुते चतुर्दशनखो व्याधिं पुरवासिनां हस्ती। त्रयोदशनखो राष्ट्रवित्तविनाशं करोति भूपस्य। द्वादशनखस्तु कुरुते पदातितुरगक्षयं संख्ये। एकादशनखयुक्तो गजहानिकरो भवेत् स गजः। पुरदाहं च दशनखः करोति हस्ती दुरालोकम्। चतुरङ्गस्य बलस्य नाशनन्तु नवनखो गजः कुरुते। अष्टनखश्च पुरोहितवंशसमुन्मूलनसमर्थः। सप्तनखः प्रतिहारं नाशयति च षड्नखोऽमात्यम्। पञ्चनखो भक्तिकरं चतुर्नखो द्वारपालञ्च। त्रिनखोविषयाक्षेपं द्विनखस्त्वान्तःपुरानुबन्धञ्च। एकनखोनखरहितो राष्ट्रविनाशं ध्रुवं कुरुते। एवम्भूतनखाये नरपतिना न ते गजाग्राह्याः। लाक्षमञ्जिष्ठाभोऽतिलोमशोहीनकर्णकरवालः। हस्ती विवर्जनीयो हीननखः पूतिलोमा च। ज्वलनक्षतं शस्त्रक्षतं दुर्भिक्षक्षतं महद्भयं कुरुते। यस्मिन् देशे वसति नाशयति वन स दुष्टात्मा। यस्य न भवतोदन्तौ ज्वलनक्षतं दुर्भिक्षक्षतं महद्भयं कुरुते। यस्मिन्देशे स वसति नाशयति वनं स दुष्टात्मा। यस्य न भवतो दन्तौ कुलक्षपवतोऽपि गर्भदोषेण। स गजोमत्कुणनामा न तं रणे योजयेद्राजा। कुञ्जरघटागतोऽसौ हरति गजानां बलं च सत्वञ्च। अतएव समरकाले नराधिपैर्वर्जनीयश्च। तनुह्रस्वदीर्घदन्तोद्धतिसङ्कटवक्रविघटितविषाणः। एकदशनस्त्वधोमुखरदनश्च गजः प्रभुं त्यजति। रदनविहीनो हस्ती निःशेषलक्षणयुतोऽपि। भवति न नृपतियोग्योमदजलसंसिक्त गण्डोऽपि। दूषितविरहितदीने सत्वरहिते विवर्णे च। निष्प्रभकुञ्जकुहरे राजा नारोहति सत्वाहरहिते च। एवम्भूतास्त्याज्याः मित्रनाशका रणे करिणः। अक्षिभ्यामश्रुजलं निपतति नागस्य यस्य नित्यं हि। नयनव्याधिवियुक्तस्य तस्य भर्त्ता रणे म्रियते। वर्द्धनशीलाश्च नखा भर्त्तुश्चैव संबाधनकराः। जिह्वानखमुखमेहननयनानि भवन्ति यस्य कृष्णानि। बाह्यस्थचित्रकृष्णः स गजोभर्त्तुः क्षयं कुरुते। बाह्यांसफलकपीठो राजन्! कृशेन पृष्ठवंशेन। वदनेन च कपिवदनानुकारिणानिन्दितो हस्ती। कर्णौ दन्तौ च समौ न नतौ भवतो यस्य नरनाथ!। स नराधिपबलविनाशकरः करी जायते समरे। चित्रौ रोमचितौ वा स्थूलौ वातिप्रलम्बिताण्डौ वा। कोषौ कोषविनाशं स करोति नागस्य भूपानाम्। सितबिन्दुभिर्विचित्रं श्वेतं वा यस्य जायते मेढ्रम्। स गजः शत्रुविनाशं करोति भूपस्य संग्रामे। छागस्येव विचित्राणि यस्य देहे भवन्ति रोमाणि। स गज प्रतिगजबलेन विह्वलो निजबलं दहति। सुप्तोत्थितस्य वदनात् यस्य गजेन्द्रस्य गलति रुधिरजालम्। ज्वलनकणं मुञ्चति शश्वदसौ भर्त्तृनाशकरः। इति कथितं तव नृपते! दुष्टमातङ्गलक्षणं सम्यक्। पापकरिणीलक्षणमतः परं संप्रवक्ष्यामि। यल्लक्षणं मयोक्तम्भद्रादीनां शुभं च दुष्टं च। तत्करिणीष्वपि योज्यं जातिविभागेन च युक्तासु। शुभलक्षणेन ललितानि करेणुकानामङ्गानि भवन्ति। युवतिसदृशानि पुरुषोचितानि च तथा पीनान्यङ्गानि करेणूनाम्। गजसंस्थाना करिणी निर्गतदन्ता सुपीनकाया च। स्थूलायता च सततं प्रभूतदया मता च करिणीनाम्। प्राच्यवनसमुद्भूताः प्रायेण लक्षणयुता भवन्ति करिण्यः। शुभलक्षणेषु च च्छाया लक्षणं प्रधानं तच्च पञ्चविधं भवति। पृथिव्यप्तेजोवाय्वाकाशात्मकम्। तत्र पृथिव्यप्तेज आत्मकं प्रशस्तं वाय्वाकाशात्मकमप्रशस्तम्। क्रमेण च्छायाभिधीयते बलोपचयवशेन समुत्पद्यते। तस्यैव देहोद्द्योतजननी स्थिरा प्रभाऽभिधीयते। छायाफलस्य द्विगुणफलसम्पादनसमर्था प्रभा

भवति। छाया देहसमाश्रिताः स्थिरप्रभावाऽस्थिरा छाया बलोपचयवशेन सुसमुत्पद्यते। नरेन्द्रस्यैवोद्योगकाले शुभकर्म्मफलसूचनार्थं गजस्य प्रभा प्रकटीभवत्येव। एवं छायागतो भेदोऽवगन्तव्यः। साम्प्रतं छायारूपमभिधीयते। स्निग्धा गम्भीररूपा पार्थिवी छाया भवति। स्निग्धाजीमूतसन्निभा च सलिलसम्भूता, स्निग्धा रक्ता च ताम्रा च तैजसी छाया। त्रयं चैतल्लक्षणं शुभमशुभलक्षणानि गजस्य स्तम्भयित्वा सुखप्रदं भवति। अथाशुभा कथ्यते निःप्रभा परुषा रूक्षा भस्मनाकुलवर्णा च वायवी। रूक्षा तन्वी कृष्णादिविविधवर्णा आकाशात्मिका। इत्थं छायाद्वयमति गर्हितम् गजलक्षणानि तिरस्कृत्याशुभप्रदम्भवत्यनेन प्रकारेण छायालक्षणमुक्तं भवति। विकटह्रस्वबालवृद्धकृशाङ्गहीनाङ्गेषु व्याधिपीड़ितविकलाङ्गेषु गजेषु नारोहति राजा भृत्याश्चैतेष्वारोहन्तीति। यादृशं च समरकाले मातङ्गं राजा समारोहति तादृशस्य लक्षणमभिधीयते। बलं कण्ठे स्थितं नित्यं कुञ्जराणां नरेश्वर!। अतःसंपूर्णकण्ठस्तु शिखिपिङ्गललोचनः। घनमांसचितांसस्तु द्विपोऽवप्राणतत्परः। वराहजघनश्चैव सुविषाणोवराननः। सुप्रतिष्ठितपादस्तु यः स्यादगुरुमल्लिकः। प्राजापत्योगजोह्येष संग्रामार्हः प्रकीर्त्तितः। मधुपिङ्गलदन्तोयः किञ्चित्पीतकच्छविः। रोमाणि चैव रूपाणि मुखं च कमलप्रभम्। रक्तोत्पलदलच्छाये सूक्ष्मे तीक्ष्णे च लोचने। ऐन्द्रोगजस्तु विज्ञेयोरिपुदन्तिविनाशनः। ताम्रतालुकजिह्वोष्ठसुजातनिविड़ापरः। पीनोन्नतशरीरस्तु रक्तकोकनदच्छविः। आयतेन तु दन्तेन करेण सुखशोभिना। पीयूषपिङ्गदन्तो हि गजःकौवेर उच्यते। तरुणाम्बुदसंकाशोहतप्रभविषाणभृत्। संपूर्णकण्ठपादस्तु संपूर्णसममस्तकः। मृदङ्गध्वनिगम्भीरनादपूरितदिङ्मुखः। आयतेन च हस्तेन शीकरोत्किरणप्रियः। वारुणोऽयं गजोराजन् संग्रामेषु तिपूजितः। कण्ठस्त्रिवलिसंयुक्तः संपूर्णोयस्य दृश्यते। लोचने ताम्रपिङ्गे च दन्तौ केतकसप्रभौ। पादौ च वलिनौ यस्य पीनगात्रसमांसलौ। पृथुलौ विन्दुचित्रौ च कर्णौ चाताम्रपल्लवौ। ऐशानोऽयङ्गजो राजन्! रणकर्मणि युज्यते। तालुन्युरसि वक्त्रे च पक्षयोरुभयोरपि। आताम्रा यस्य दृश्येत च्छाया मृदुतनूरुहा। असौ सौम्यस्तु विज्ञेयः कुञ्जरः समरोचितः। अर्चिःपिङ्गलरोमा यः केशैश्च श्वेतपिङ्गलः। पिङ्गलाक्षिविषाणश्च रक्तपुष्करतालुकः। आग्नेयः स गजोज्ञेयस्तेजसाग्निसमप्रभः। राज्ञा बुद्धिमता नित्यं धार्य्यः समरकर्म्मणि। कृष्णवर्णं युताग्राणि सूक्ष्मस्रोतांसि लोचने। निर्धूमाग्निसमच्छाये मूलग्नश्च करस्तथा। कायश्च पीननासःस्याद्वेगे वायुसमः शुभः। राजन्! वायव्यमिच्छन्ति तङ्गजं शास्त्रकोविदाः। संख्ये नियुक्तश्च गजोनाशयेद्रिपुवाहिनीम्। निरङ्कुशत्वं चण्डत्वं तस्य दोषद्वयं भवेत्। निरङ्कुशत्वं शमयेत् प्रयोगाश्वासनादिभिः। चण्डत्वं च तथा नित्यं सुकुमारक्रियादिभिः। रोमाण्यञ्जनरूपाणि नखाः शङ्खसमप्रभाः। निस्त्रिंशविमलच्छायः स भवेद्वैष्णवोगजः। स वैरिणं जयेद्राजन्! रिपुसैन्यविमर्द्दनः। कुम्भवक्त्रः कटौ यस्य निस्त्रिंशघनसंनिभौ। बिन्दुभिश्चित्रितं यस्य स विचित्रश्रवो गजः। तेन संग्रामकर्म्माणि कुरुते यो नराधिपः!। नित्यं चारिजयं तेन स राजा फलमश्नुते। सुदन्तो दीर्घहस्तश्च बृहदङ्गुलिपुष्करः। घनमांसशरीरश्च कूर्म्माकारोहि सत्तम!। सांग्रामिकोगजोह्येष जीवत्यपि समायतम्। संग्रामविजयो नित्यं प्रतापजननक्षमः। महाशिरा महाकायो महामेढ्रो महाकरः। महादन्तोदरश्चैव महानागोवरासनः। महानेत्रो महौष्ठश्च महाकर्णोमहामुखः। महामदो महाकण्ठोभवेत्सांग्रामिकोगजः। यद्भद्रलक्षणं पूर्व्वमुक्तं नृप! तच्छुभमेव हि। मन्दस्यापि हि शस्तं स्यादाद्यावेतौ च महागजौ। संपूर्णलक्षणोपेतौ न भवेन्न महीतले। अनयोरेव भेदास्तु नागानां समुदाहृताः। सांग्रामिका द्विपा रजान्! शुभलक्षणलक्षिताः। कथितास्तव तत्त्वेन राजसौख्यकरागजाः"। आभिषेचनिकगजलक्षणं तत्रैव।"पीनमांसचितांसश्च कूर्म्माकारनखस्तथा। समवचितसांसस्तु सुवृत्तः कल्पनापरः। छागकुक्षिः सुपार्श्वश्च रोमानाहसमन्वितः। ज्वलनोज्ज्वलनेत्रस्तु सुविषाणो महाकरः। संपूर्णचिबुकश्चैव क्रमायामोरयान्वितः। बलसत्वसमायुक्तः स्निग्धच्छविमनोरमः। सांग्रामिको भवेद्राज्ञ आभिषेचनिको गजः"।

तत्रैव पालकाप्ये गजहृदये।"आयुः सविंशति शतं मानं स्यात् सामजन्मनाम्। राजपुत्र! दिशाम्येवमायुष्यादि दशादश। लक्षणानि वदे तेषां क्षेत्राण्येवं विषाणिनाम्। लक्षणालक्षणं ज्ञेयमायुष्यादिदशाफलम्। क्षेत्राणि हस्तौष्ठमुखं दन्तौ शीर्षं च चक्षुषी। कर्णौ ग्रीवा च गात्रञ्च वक्षः कार्य्यस्य भेदतः। लक्षणं सन्निकृष्टं यद्विप्रकृष्टञ्च यद्भवेत्। मतास्त्रिबलोपेतं प्रभूतञ्च मनीषिभिः। तुल्ये कुले वने जातौ प्रचारे शस्तु लक्षणम्। दशायाञ्च तदाख्यातं

प्रभूतमिति सूरिभिः। दक्षिणन्दक्षिणाङ्गं च हस्तिनः शुभ-
दं मतम् । तथा वामं च वामाङ्गं हस्तिनीफलदं मतम् ।
लक्षणं दक्षिणाङ्गोत्थं फलं भूमिभुजां मतम् । महद्व्यक्तं
भवेयद्यच्च लक्षणं तन्महाफलम् । यदल्पमप्रकाशञ्च तद-
ल्पफलदं मतम् । मध्यमानफलं मध्यं लक्षणं तु समादिशेत् ।
शुभाशुभेन मिश्रेण बहुत्वेनादिशेत् फलम् । कदाचित्
शुभदं चास्य गजानामप्यलक्षणम् । शुभकर्म्माणमासाद्य
राजानमथ वा द्विजम् । यथा हि सर्व्वसरितः समुद्रं समु-
पेत्य हि । स्वरसेन वियुज्यन्ते भवन्ति लवणाम्भसः । एव-
मासाद्य भर्त्तारं बहुलक्षणलक्षितम् । भवन्ति बाधिता-
नीह दुर्लक्षणफलानि च" । इत्युपक्रम्य गजदेहस्थानवि-
भागनामभेदस्तत्रैव दर्शितः । यथा "विषाणयोर्यस्तिर्य्यक्स्था-
दावताग्रो पद्मोऽपि सः । किविवा च पद्मस्याधःकुम्भो-
परि च बिम्बकः । अथ पद्मोपरिस्थोऽपि पुरुष्करोऽपि
भवेत्तथा । तथा पद्मोपरिस्थे च किविवोपरिभागके ।
वाहित्थोपरि कोशाश्च मस्तकं च तथा मतम् । स्यातां म-
स्तकपिण्डौ च मस्तकस्यश्च विन्दुकः। तथा विन्दूपरि स्यातां
वितानौ विन्दुपार्श्वतः। ततोऽन्तरवितानं च पृष्ठं तत्र वि-
निर्दिशेत् । विन्दुवितानयोश्चान्तः पुरस्तात् पाकिलौ किल ।
नीचे मस्तकपिण्डाद्धि वितानविन्दुपाकलः । निर्य्याणं च
वितानोर्द्ध्वं कर्णौ वापि ततः कटौ । कटयोः श्रोतसी
वापि कटस्रावस्तयोरधः। पृष्ठतः कटिसंधी च गण्डौ च
कटयोरधः । कटगण्डान्तसद्भागे घाटसन्धी च घाटके ।
घाटासन्ध्युपरिष्टाच्च कर्णसन्धिसमीपगे । श्रवणे गात्रग-
ण्डाधःकपोलौ च तदन्तरे । रोमकूर्चौ च पादौ च कपो-
लाधस्तथा मतौ । ततः शगदसन्धी च शगदान्तरमत्र च ।
आशगदात् हन्वधः प्रदेशः शिरसोमतः । अक्षिकूटावुप-
र्य्यक्षावभावुपरि वै तयोः। शुद्धेवाक्षोऽधरः स्यात्तु नेत्रस्रावौ
तयोरधः । अपाङ्गावक्षिबाह्ये च तत्सन्धी चाक्षिपृष्ठतः ।
पक्ष्मणोर्मण्डले चाथ तत्सन्धी वर्त्ममण्डलौ । वर्त्ममण्डल
सन्धी च ततश्च श्वेतमण्डले । श्वेतमण्डलसन्धी च ततः
कृष्णे च मण्डले । तत्सन्धी च ततः कृष्णे सतत्सन्धी
वर्त्ममण्डले । तयोरपि तथा सन्धी प्राग्भागे चक्षुषो-
रपि । कनीनिके समाम्नाते सन्धी तत्र तथानयोः ।
इत्यक्षिगतदेशानां समुद्देशो भवेदिह । किल विस्तौ च
कर्णौ च कर्णयोश्चूलिका ततः । तदधः कर्णपिप्पल्यौ
वलिके द्वे प्रदेशगे । कर्णमस्तकसन्धी च पश्चात् कर्णापव-
र्त्तयः । तदन्तश्च समस्थानावुद्घातौ परिकीर्त्तितौ । कर्ण-
चूलिकयोरग्रे पिङ्गलाख्यौ च भाषितौ । पुरस्तात् कर्णपि
पल्याः कर्णसंवेशचर्म्मणी । कर्णान्तः कर्णनाड्यौ च लम्बे-
तां तस्य भागतः । तयोर्वीथिःकबन्धश्च सगङ्गमध्यकर्णयोः।
कर्णसन्ध्योरधस्ताच्च तथाधःसन्धिसंज्ञितौ । तदधःकर्ण-
पाल्यौ च प्राक् कर्णोपरितस्तयोः। नाड़ीपार्श्वगतौ चात्र
मध्यकर्णौ तयोरधः । अधःकर्णौ समाख्यातौ बहिःकर्णा-
पवर्त्तयोः । पार्श्वकर्णौ बहिःकर्णौ कर्णयोश्च क्रमाद्
बहिः। अन्तरान्तरकर्णौ च पर्य्यन्तकर्णपार्श्वयोः । अधस्ता-
च्चेति भागाः स्युः कर्णयोः कारणोऽपि च । ग्रीवायाः
प्राग्भवोभागो ग्रीवा सन्धिस्ततस्तथा । ग्रीवापृष्ठं ततः
स्याच्च मध्ये तच्च कृकाटिका । ग्रीवापृष्ठे तथाधस्ताद्गल-
माङ्घ्रिपस्य च । अधःकण्ठयोश्चोर्द्ध्वं मन्ये ते गलकण्ठ-
योः । धमन्यौ कण्ठपार्श्वे च तयोश्चावलिपिण्डिका ।
गलस्य पार्श्वयोरूर्द्ध्वं दर्दुरौ चात्र निर्दिशेत् । शुद्धे मन्यो-
परिस्यातामुपरिष्टात्तयोस्तथा । किविकौ च तथा चोक्तौ
पश्चादुपरि चैतयोः । पार्ष्णिघातौ च संख्यातौ पार्ष्णि-
घातान्तरे तथा । उत्सङ्गावुपरि स्यातां स्कन्धादूर्द्ध्वं तथा-
नयोः। तन्मध्ये पणवश्चोर्द्ध्वमिति ग्रीवांशसंग्रहः । (हस्ति-
पकेन पार्ष्णिभ्यां यौ देशौ हन्येते तौ पार्ष्णिघातौ) गात्र-
मात्रमायतं च भवेदासनमादितः। तत्पार्श्वयोः प्रतीकाशौ
तावंसौ च तयोरधः। तदधःप्रत्यगंसौ च तथैवांसफले तथा ।
तदधस्तात्ततोबाहू ततोबाहूत्तरं तथा । अर्व्वागत्र गुह्ये तत्र
बाहुपृष्ठोद्भवे अपि । अपारे च तदूर्द्ध्वं च तयोस्तद्भाविकौ
तथा । पाल्यावधाङ्गादूर्द्ध्वञ्च तयोरायामपृष्ठतः। पाल्यन्ताङ्ग-
पुरस्ताच्च भुजयोरुदितौ यवौ । यवभागोपरि तथा पुरस्तात्
फलकोच्छ्रितौ । पिण्डिकाधश्च वेमाख्यौ विशोषौ यव-
योरधः । उत्सङ्गौ च विशोषाधः प्रहौ चापि तयोरधः।
तत्सन्धी च ततः पर्व्वसन्धानौ तदधोमतौ । तदधः
पाणिपादौ वै कूर्चौ चानु तयोरधः । तदधोनखकूर्चाश्च
ततो नखशिखा दश । पुरःपुरोनखौ नाम्ना सनखौ चैव
विस्तृतौ । तत्पश्चात्तु नखग्रीवा विशोषाः पार्श्वतोनताः ।
अन्तःपार्श्वबहिःपार्श्वे स्यातां पार्श्वनखेषु च । कृयाश्च
राजयश्चात्र पादनाड्याविकास्तथा । तलसन्धी ततः स्यातां
तले च तदनन्तरम् । तलप्रदेशपुरतस्तत्परा नखुभ्रतः ।
तलकर्षौ ततः पश्चात् तलप्रहौ ततःपरौ । तलयोरन्तरं
चैव हृदये च करीरके । किंविनीराजयश्चेति तलसङ्घाटिका
अपि । पक्षहस्तौ ततः स्यातामन्तर्बाहू ततोऽन्तरे ।
बहिर्बाहू बहिश्चोर्द्ध्वं गात्रं सर्व्वं ततोऽपि च । कक्षौ गात्र

प्रहोर्द्धश्च कक्षयोरन्तरं ततः । इति प्रदेशा गदिता गजानां गात्रगोचराः । कण्ठस्यान्तर्मणिः पूर्वं ग्रीवायर्व समाश्रयः । उरोमणिः समाम्नातस्तत: स्यादुरसः स्थितिः । याऽधोभा पार्श्वगा तत्र गात्रसन्धिसमाश्रिता । आवर्त्तमणि रप्यत्र विज्ञो भास्वरसङ्गतः । तत: सन्धिकरस्तु स्यात्तस्याधः स्तनयोः पुरः । मात्रयोरन्तरं चापि चतुरस्रान्तरं भवेत् । अधःस्तनौ च स्तनयोरन्तरे चाथ चूचुके । स्तनान्तौ स्तनकूर्चौ च चोरिकौ चापि कूर्चकौ । चतुरस्रान्तरालं च भवेच्चूचुकयोरधः । स्तनयोरप्यधस्ताच्च पुरस्तात् स्तनयोर्भवेत् । हृदयं चास्य पार्श्वस्यायामौ च बहिस्तयोः । स्यातामायामकाण्डौ च तदधोविवशौ ततः । ततः क्रोडं पदाधस्तात् पश्चाच्चायामकाण्डयोः । रन्ध्रे चापरवस्तिस्य स्तनयोरप्यनन्तरम् । जठरे नाभिरित्येते प्रदेशाः किल वक्षसः । आपराङ्घ्रिपरःशेफोरेत:स्यावावधिः स्मृतः । ततोऽण्डकोषसन्धिः स्यात् कोषसन्धिश्च शेफतः । क्रमान्मेहनमत्र स्यात् मेढ्रसंज्ञो भवेदपि । आनिर्गमात्तथा तस्य बाहुपार्श्वगतौ मतौ । अप्यतस्तत्र ककुदं तस्याश्री पार्श्वयोरपि । मेहनस्य पुरःस्रोतो वङ्क्षणौ कोषपार्श्वगौ । अपराश्रयिणी शुक्रे तथा वङ्क्षणमध्यगे । इत्यण्डकोषभागाः स्युः क्रमादासनमुच्यते । तदन्त्यासनञ्चोर्द्ध्वं वक्रवंशस्य पृष्ठत: । भवेदपरवंशस्य ततोन्यच्चाथ आसनम् । पश्चिमासनमप्यस्य पृष्ठतः परगस्य च । अत आस्तिप्रदेशस्य ततो वंशस्य बालधिः । (आस्तिरासनम्) । आश्रयेत्यभिधानाश्च भागाः पक्षान्निषादिनः । स्यातां च तत्पलाधस्तात् पक्षसन्धी तथा ततः । स्याताञ्च पक्षपार्श्वे च गर्भूकाश्च क्रमादपि । पक्षाधोनन्तरौ चानुकूचौ पक्षसमावृतौ । निम्नाभौ मध्यगौ तत्र शङ्कू चैवोर्द्ध्वमध्यतः । कक्षाभोगौ काकपक्षौ शङ्कुच्छायाकरौ ततः । उत्कृष्टौ कुक्षिपश्चाच्च त्र्यस्थिपार्श्वगतावपि । कालकोत्कृष्टदेशानां पात्रवंशस्य पार्श्वयोः । कालके पिण्डिके चाधो विद्याच्चापरयोः स्थिते । उत्कृष्टपिण्डिका त्र्यस्थिस्थानमेवालम्बनम् । जघनं परतोऽस्माच्च एवं कालनका दश । भवेत् पायुस्य पायोस्तु गुदमभ्यन्तरं तथा । बहिर्गुदस्य वर्त्म स्यात् गुदान्तःकन्दरं विदुः । विलपायून्तरे कक्षौ तथा पिण्डिकयोरपि । अधस्तादन्तरे किंचिन्यन्तरे तस्य संस्थितिः । पिण्डिकाधस्य मण्डूक्यावष्ठीलौ पिण्डिकान्तरे"। अवयवप्रमाणभेदास्त्वेवं । "पिण्डिकारत्निकामाना पुष्करोऽपि भवेत्तथा । कर्णसन्धिर्भवेच्चापि तच्चारत्निप्रमाणतः । कर्णापवर्त्तौ पाल्यौ च स्यातां हस्तसमुच्छ्रितौ । कर्णाश्री च तथा त्र्यिद्याद्विस्तारे द्वादशाङ्गुले । कर्णाश्रावपि हस्तौ द्वावायाम परिणाहतः । कर्णावर्त्तिं विद्धि कर्णप्रमाणेन च रत्निकाम् । शिर आसनमुद्दिष्टं मानेन त्रिकहस्तकम् । शिरसस्तु प्रमाणेन स्यात् षड्ङ्गुलमासनात् । आसनेन समं शीर्षं कल्याणकरमित्यपि । यस्यासनं च नीचेन शिरसः स्यात् षड्ङ्गुलम् । अवाप्यो नाम स प्रोक्तो गजोनिन्दितलक्षणः । शिरो यस्य भवेदुच्चमासनाद्द्वादशाङ्गुलम् । सोऽभ्युदयाभिधानेन लक्षणादासनं भवेत् । आसनं वङ्क्षणोद्देशाद्याहश्च पक्षभागतः । मञ्जुसमानफलक उत्कृष्टोऽङ्गोस्थितोऽपि च । अष्टौत्येवं समाख्यातं लक्षणादासनं भवेत् । हस्तद्वयप्रमाणेन पेचकात् पश्चिमासनम् । द्वादशाङ्गुलनिम्नं स्यादासनात् पश्चिमासनम् । सार्द्धहस्तत्रयं चाधः प्रमाणमपि बालधेः । सप्ताङ्गुलप्रमाणेन पायुस्य परिमण्डलः । अरत्निपरिमाणेन विदुस्तद्दगुणान्तरम् । अरत्नितोऽधिकं यस्य विस्तरेण स्तनान्तरम् । तिर्य्यग्गोमचयं गात्रमरिष्टः शोकदोगजः । अरत्नित्रयमानेन नाभिदेशस्तनान्तरम् । नाभिश्च मूत्रकोषश्च गुदारत्न्यर्द्धमानतः । अण्डकोषश्च हस्तार्द्धप्रमाणेन समन्वितः । द्वे चारत्नी तथार्द्धं च कोषमानं भवेदपि । सोऽर्द्धहस्तद्वयायामोहस्तानाह्युतोमतः । प्रौढे तु परिणाहः स्यादरत्निद्वितयं तथा । हस्तयोश्चार्द्धमानं स्यात् चतुर्भागेण संयुतम् । तत्तस्य पार्श्वतः प्रौढावरत्निप्रमितौ मतौ । चतुर्भागयुतारत्निर्भवेन्मत्तलोपरि । अष्टाङ्गुलप्रमाणेन स्यातां ततः पुरोनखौ । सप्ताङ्गुलश्चापनखः पार्श्वे पञ्चाङ्गुलानखाः । चतुर्विंशत्यङ्गुलश्च भवेद्गात्रापरे तथा । अपराभ्यां भवेद्गुल्फसन्धिररत्न्यर्द्धेन मानतः । अरत्निश्च तलायामोभवेच्च करयोरपि । सप्ताङ्गुलास्तु वंशोषाः पाल्योः पार्श्वनखास्तथा । पञ्चाङ्गुलास्त्र्यङ्गुलाश्च नवचापि नखा मताः । इत्यङ्गमानं नागस्य दिङ्मात्रमिह दर्शितम् । समाङ्गा अपि मातङ्गा दृश्यन्ते दुःखदाः क्वचित् । दृश्यन्ते विषमाङ्गाश्च क्वचित् कल्याणदायिनः । तस्मात् प्रमाणं केषाञ्चिदप्रमाणतया मतम् । प्रमाणं लतमाचार्य्यैः सर्व्वलक्षण वेदिभिः । अथाङ्गसङ्गमात्तावत् मातङ्गानां गुणागुणाः । भूयोऽन्यगुणदोषाभ्यां प्रसङ्गात् कथिताः पुनः । उपरिक्रमतो दृप्तो नातिस्तब्धोन्नदुस्थितिः । दृढस्निग्धाच्छरोमा च लोहिताङ्गुलिपुष्करः । सर्व्वव्यक्तप्रमाणस्य गजः कल्याणकारकः । भाग्यप्रदो बालहस्तस्तथायततनूरुहः । अर्थदो हीनबिन्दुश्च गजो दुःख-

प्रदो मतः । द्विपाद्धस्वकरा ह्रस्वा हीनपार्श्वाश्च दुर्व्विदाः । पुष्करं हीनमव्यक्तं विद्यात्कर्त्तृविनाशनम् । शुक्तमाने निगाले च निम्नस्रोतसो शुभे । सुसमाहिते च स्यातामुत्पलाग्रसमद्युती । उन्नतौ क्रमवृत्तौ च स्निग्धावभ्युदितौ समम् । दक्षिणौ च समानौ च प्रहारप्रगुणच्छवी । ततः प्रदक्षिणावर्त्तावुदात्तौ दन्तिनां रदौ । करस्य गात्रतो चापि श्वेतास्थिसदृशद्युती । विषाणे च तथा स्यातां चापाग्रे वारणस्य च । यो दक्षिणैकदन्तस्तु श्रिया तु रहितो गजः । वामैकदन्तो दन्ती च दुःखदः स्वामिनो मतः । दशां प्राप्य चतुर्थीं च द्वितीयां यस्य न द्विजौ । स्थूलावनायतौ स्यातां स मूढो नाम दुर्गजः । अङ्कसंस्थानवक्रौ च प्रतिमानगतौ न वा । युयुत्सामिव कुर्व्वाणा यस्य बालाः सदुर्द्विपः । दन्तौ हलोपमौ यस्य दीर्घौ पार्श्वेन चोन्नतौ । दक्षिणेन विषाणेन वामदन्तदरन्तथा । कारयेद्यस्तु मातङ्गो वामदारी स वै भवेत् । तथा दक्षिणदारी च दक्षिणदरणं तथा । वामेन कारयेन्नेष्टो यातुः स्वामिनएव सः । तथा हलविशालेन दन्तेनैकेन दन्तिनः । स्थूलेनाखर्वदीर्घेण दुःस्थिताख्योऽपि वर्ज्जितः । अन्तर्नताभ्यां सद्दन्तः कुदन्तोऽपि नतावधः । कूपे वामोन्नतिश्चापि रदाभ्यां द्विरदः क्वचित् । दन्तदुर्वांससाख्यो हि द्विरदोमध्यलक्षणः । बहिर्नतौ हस्तलम्बौ रदौ यस्य स दुर्गजः । कृष्णायतौ रदौ मूले विनिहन्ति मदागतिम् । श्यामलाकार रदनाग्रन्थिसदृशनास्तथा । दुर्जाता विषमा वक्रफलकाश्च कृशास्तथा । ख्यातदोर्घातिह्रस्वाश्च वदनेनाशशंसिनः । त्रिरत्निमितमेढस्य पञ्चरत्निमितोरदः । यष्टिदन्तोऽनुकथितो राजपुत्र ! मनीषिभिः । प्रपूर्णं प्रतिमानञ्च ताराभं वलिवर्जितम् । सूक्ष्मविन्दुसमानद्धं मृदुत्वक्कायरोमशम् । स्वायतं पृथुवाहित्थं सर्व्वगात्रसमाहितम् । रक्तौष्ठतालुदशनविलग्नतुल्यणस्थितिम् । तं राजा वर्जयेत् युद्धे शुभलक्षणवर्जितम् । बालार्कसदृशे यस्य हरिवर्णविलोचने । मनःशिलाप्रभे वापि हर्य्यक्षोऽसौ शुभच्छदः । पद्मापाङ्गे च विपुले सुप्रसन्ने सितासिते । यस्याक्षिणी सचाक्षिभ्यां विभक्ताख्यो हितप्रदः । यस्य तुङ्गे च नयने महती दृष्टिमण्डले । स्निग्धनिर्मलवर्त्मस्थ तारकाक्षः स सम्मतः । यस्यासृजः समाभासे वृत्ताकारे विलोचने । पारावताक्षं नागं तं प्रशंसन्ति शिवप्रदम् । सुखे नात्यायते नेत्रे प्रसन्ने स्वच्छदर्शने । यस्य स्यातां सचाक्षुष्यो वारणः शुभलक्षणः । ईषद्वैरिकसङ्काशे दृश्येते यस्य चाक्षिणी । ध्वाङ्क्षाक्षः स विनिर्दिष्टो दुर्भिक्षारिभयावहः । कृष्णापाङ्गे शुभे नेत्रे कांस्यसदृशप्रभे । यस्य स्यातां भवेन्नाग शूकराक्षः स गर्हितः । समन्ततो नोपचिते संस्पृष्टे च मनाग्दृशौ । प्रौढाक्षिकूटौ यस्यापि विष्वगक्षः स दुर्भगः । वैषम्याद्विषमप्रेक्षो नेष्टो हरितया दृशा । तथा निष्प्रभया दृष्ट्या वर्ज्जितः काचपिङ्गलः । तन्द्रीयस्यानुदृश्येत विरूपं विषमं तथा । तथैव तिर्य्यग्दृक् हस्तो तिर्य्यक्प्रेक्षो स दूषणः । अधःप्रेक्षो च यो यः स्यादूर्द्ध्वगामिविलोचनः । सदृशो बभ्रुमार्जारप्रभल्यसतचक्षुषाम् । स स्यादनिष्टदृक् हस्ती तिर्य्यक्प्रेक्षो च दूषणः । अधःप्रेक्षो च सत्त्वयो मृदूर्द्ध्वगामिदर्शनः । दृष्टिः स्निग्धा प्रफुल्ला च सुस्थितामलतारका । ऋजुपक्ष्म प्रसन्नस्य वारणस्य विलोक्यते । उद्भ्रतारको नाम्ना साम्ना पार्श्वविसर्पिणी । विस्तब्धाचलपक्ष्मा तु कुपिताऽनेकपस्य दृक् । सर्वाङ्गलक्षणेभ्योऽपि चक्षुर्लक्षणमुत्तमम् । इत्येवं लक्षणानां पूर्वेषामनुशासनम् । प्रशस्तनेत्रे द्विरदे न्यसोभद्राणि पश्यति” मस्तकादिलक्षणन्तु प्रायेण वार्हस्पत्योक्तलक्षणसमभिव्यतस्तन्नोक्तं यत्र विशेषस्तदुच्यते । “एककूपप्रजातानि स्निग्धानि च मृदूनि च । रोमाणीष्टानि रोमणाञ्च मेचको दक्षिणाङ्गजः । लाङ्गूलस्यैव रोमाणि दृश्यन्ते यस्य हस्तिनः । संहतानि विचित्राणि स पूज्यो वारणोत्तमे ।”

करिणो वामनत्वादौ कारणान्तरं तत्फलञ्चोक्तं तत्रैव “वाय्वाकाशगुणाधिक्यपृथिवीगुणवर्ज्जनात् । जायते किल मातङ्गः कुब्जो वा वामनोऽपि च । यतो भूतगुणोऽन्योन्यमधितिष्ठति मानतः । तैर्गुणैर्जायते सर्वो दन्तीति मुनयो विदुः । हीनाङ्गो हानिकारी स्यादधिकाङ्गोऽधिकं हरेत् । राष्ट्राहितौ भवेतान्तु खञ्जकुब्जाविति स्थितिः । व्यायामानाह संयुक्तो ह्रस्वाकारो हि वामनः । नष्टोव्यन्तरनिर्याणो महास्थिसगदोऽपि च । कक्षिश्वेतौ च कृष्णौ च दन्तौ यस्याश्रितौ करम् । स भ्रामयित्वा राजानं हत्वा वाथ पलायते । सुखमेढ्राङ्गुलिकरः श्रोत्राश्रिश्वेतरोमयुक् । कपिकौशिककाकाहिनकुलप्रख्यलोचनः । कालपिङ्गलनेत्रस्य तन्वाननहनुस्तथा । वल्या समाननिर्याणः प्रत्यग्पृष्ठपेचकः । मण्डूकाभरुचित्वक् च सास्नानलसमोऽपि च । परिमण्डलकर्णश्च सदृष्टाङ्ग शिवध्वजः । प्रौढोच्चताक्षिकूटाक्षः सकिलासाङ्घ्रिमेहनः । व्यालदत्यवगन्तव्यो निर्मदो दन्तिदूषणः । सवली यस्य संदानौ प्रौढौ चापि कचाचितौ । चिवुके चायतस्थूले व्रणैश्च तनुराजिता । अधोवक्त्राणि रोमाणि

हनू च कृशरोमगे। सुदक्षाक्षतयः पादा डिम्बइत्यपि विश्रुतः। श्यावौष्ठतालुरसनाः काल कल्याणकान्तयः। कर्णौ कषायितौ न्यूनौ ताम्रवर्णस्य वालधिः। कराभिप्रेक्षणासक्तौ मानोनाङ्गुलिपुष्करे। स्थूले च पक्ष्मणी नेत्रप्रभे दुष्प्रेक्ष्ये तथा। दुर्बलानि तथाङ्गानि वलीमुखनिभं मुखम्। रेणुद्विरेफानुरूपा मक्षिकाभिश्चिताकृतिः। अरत्निमानौ दन्तौ च शुष्कावध्वनिगूहितौ। कर्णे च कठिने यस्य नीलगोपक विद्युति। विवर्णं कठिनं रूक्षं भिन्नमिश्रतनुरुहम्। नपुंसकस्य मातङ्गो स दूरे त्यागमर्हति। मञ्जिष्ठारागभावेन यत्तत्तुर्वीमरोपमा। स पूतनोऽग्निभयदो यूथहा परिवर्जितः। तिर्य्यक्प्रेक्षी चाधःप्रेक्षी दुर्गन्धमदसंयुतः। कालपिङ्गोदरोऽनिष्टो मातङ्गः स्यात् मतङ्गजः। पुष्करे स्तनमध्ये च वामहस्ते मतङ्गजः। किलासैरावृतः स्याच्च तद्राष्ट्रं दुर्नयं दिशेत्। पश्चात्समुत्थितावापो नित्यमीलितलोचनः। वाहित्थसंक्षिप्तमुखो निबद्धाक्षो मतङ्गजः। न्यूनं विंशतिवर्षस्य दन्तौ यस्य प्रमाणतः। अतिमात्रौ न वै स्यातां नागो नागसमस्तु सः। हीनातिरिक्तदशनो यस्य वै तस्य स्वल्पदः” इत्यवयवदोषाः।

“अथ वर्णच्छायावर्त्ताः पुष्पाण्याभा स्वरोगतिः। बलं सत्त्वमनूकञ्च गन्धोऽभिहितमिङ्गितम्। स्याद्भूतगुणवैशेष्याद् वर्णवैशेष्यमेव हि। वातादिभ्योऽपि दोषेभ्यो वर्णवैशेष्यमिष्यते। रौक्ष्यं परातिरेकेण सर्वं वातस्य वै भवेत्। लोहता शोणितात्, पित्तात् रौद्रता, सौम्यतेन्दुजा” इत्युपक्रम्य “कफो गर्भशयानस्य स्निग्धतां प्रतिपद्यते। पित्तं गर्भशयानस्य स्तब्धत्वं प्रतिपद्यते। तत्करी कथितः कालस्तथैव स्निग्धदर्शनः। पित्तं कफश्च युगपद् वेविष्टि तु ततस्ततः। श्यामवर्णोऽपि मातङ्गो जायते स्निग्धएव वै। गर्भे च मांससंहिते कफरक्ते यदा स्थिते। चिरं गर्भशयानस्य हरिस्निग्धस्ततोऽप्यसौ। रक्तपित्तकफानाञ्च सङ्करत्वगतौ तथा। हरितारुणपोताद्या नानावर्णा भवन्ति हि। सर्वत्रानुगवातेन मीलनाद्रूक्षता भवेत्। पारुष्यं धूसरत्वं च सुस्निग्धत्वं भवेत्तथा। क्वचिद्वर्णविभेदाश्च पूर्वसम्भवकारणात्। ग्रहनक्षत्रचाराच्च पित्रवीजवशात्तथा। तत्रापि श्वेतवर्णाश्च शुकबर्हिमणित्विषः। शुद्धहेमरुचश्चाभाः सुरेषु प्राचि च क्वचित्। न्तरान्तु हरयः कृष्णाः श्यामाश्च करिणः स्मृताः। हरिर्मधुरवर्णस्य कृष्णश्चाञ्जनसन्निभः। न कालो न हरिर्नागोमध्याभः श्याम इष्यते। एतेषु त्रिषु वर्णेषु हरिवर्णोवरोमतः”। इति वर्णभेदकारणादिनिरूपणम्।

“आवर्त्तः षड्विधश्चैव त्वग्जोदशनभङ्गजः। कोषजः पक्ष्मजातश्च वालजो रोमजोऽपि च। कोषरोमभवौ शस्तौ दन्तकल्पनजः शुभः। शोकानर्थप्रदाः प्रोक्तास्त्वग्जपक्ष्मजवालजाः। भूमिदो रोमजावर्त्तः कोषावर्त्तो जयप्रदः। दशनसम्भवावर्त्तः सुतदारप्रदस्तथा। कथितः पक्ष्मजावर्त्तो ज्ञातिजातभयप्रदः। त्वग्जश्च वालजावर्त्तः स्वामिहा रोमसम्भवः। प्रशस्तो दक्षिणावर्त्तो वामावर्त्तो विगर्हितः। मतो व्यक्तो मृदुस्निग्धः सवर्णः पीतरोमजः। वामाङ्गे दक्षिणावर्त्तो वामावर्त्तश्च दक्षिणे। आवर्त्तः सम्मतोऽभीष्टो द्विजराजसमप्रभः। शुभोऽप्यशेलजातोऽसौ शुभं नैव प्रयच्छति। अशुभश्चेत्रजातश्च नानिष्टफलदः शुभः। अवपद्धे यद्दतले स्तनयोरन्तरे तथा। ग्रीवाया मस्तिकूटोर्द्धे कुम्भयोरन्तरे तथा। उत्सवे दन्तवेष्टे च कर्णमध्ये च वक्षसि। आवर्त्ता वारणानां हि सुनिश्चेयाः शुभप्रदाः। स्तनान्तरे शिरोमध्ये कुम्भान्तश्चूलिकान्तरे। वक्षस्यावर्त्तसम्पन्नः कुञ्जरः पञ्चमङ्गलः। शीर्षावर्त्तोऽभिषेकाय स्तनावर्त्तो जयाय च। सुखाय चूलिकावर्त्तः कुम्भोरोरोमजः श्रिये। वंशे प्रोहेऽथ वाहित्थे मन्यास्य सगदे कटे। कर्णेऽक्षिकूटे नाभौ च कक्षपक्ष्मांसकूक्षिषु। वालधौ पेचके मेढ्रे रन्ध्रसन्धिकलासु च। आवर्त्ता न प्रशस्यन्ते कर्णभागगताश्च ये। कोणप्रमाणलघवो मर्मपर्वप्रदेशगाः। अशुभक्षेत्रजाताश्च सकिलासान्तरोत्थिताः। मनोनेत्राभिरामो हि सुस्नष्गोगदितो महान्। ऊर्द्ध्वप्रवृत्तो दीर्घश्च रोमजोऽर्थजयावहः। मर्मभागेषु नागस्य निष्टास्ते रोमजादयः। समभागगतावर्त्ताः सर्व्वतः सुखदामताः”। इत्यावर्त्ताः।

“स्वस्तिकादिसुसंस्थानं पुष्पं दशनदेहजम्। स्निग्धं भवेत् शुभच्छायमच्छिन्नं वाञ्छितप्रदम्। कबन्धादिकसंस्थानं विषतन्तुसमं स्फुटम्। रूक्षं कृष्णञ्च कुसुमं तातानर्थकसंज्ञकम्। दद्यात् सुतं सितं पुष्पं स्निग्धपीतञ्च हेमदम्। नीलोत्पलाभं शीलाम्रं स्निग्धकालञ्च हस्तिदम्। यदि स्यात् पूजिते भागे कुसुमं स्निग्धपाण्डुरम्। सुरचापसमाकारं तद्भवेद्भूभुजः शुभम्। शक्रचापनिभं पुष्पं दन्तोपरि च दन्तिनः। दिशेदिष्टं सुभिक्षं च क्षेमं च क्षितिरक्षिणः। स्तनान्तः स्निग्धकृष्णे च पुष्पे नाम सखे तथा। पुष्पे श्रोत्रान्तःकाले च म्लानिरृद्धिं विनिर्दिशेत्। श्रीवत्सादिनिभाकारे वैजयन्तीध्वजोपमे। शैलप्रा-

सादृश्ये छत्रचामरवीथिभिः। सोमसूर्य्यसमाभासे शिबिकायानमूर्त्तिभिः। दिष्टे शुभाय नृपतेर्निन्द्यमहि-समाकृति। श्वक्रव्यादनिभाकारं रणापसरकारणम्। धूमाभं पुष्पमिच्छन्ति स्थलवेऽग्निभयाय च। कृष्णं पुष्पं तथा नेष्टं द्विषद्रोगविवर्द्धनम्”। इति पुष्पम्

‘भूखाग्न्यम्बुमरुज्जाता भवेच्छाया विषाणिनाम्। शस्ता भूजलवह्न्युत्था न शस्ता खानिलोद्भवा। छायायाः सम्भवः पूर्वं, परतः परितः प्रभा। छायायाः सम्भवः पूर्वं प्रभा तत्परमश्नुते। वर्णमालम्बिता च्छाया प्रभा वर्णस्य नाश्रयः। लक्षणानि तु नागानां पापानि च शुभानि च। छायावशात् फलन्त्येव छाया तेनातिलक्षणम्। यस्य स्यात्लक्षणं भद्रं छाया भद्रा भवेन्न तु। न चासौ शुभदो हस्ती छायोपहतलक्षणः। पापलक्षणयुक्तोऽपि शुभच्छायायुतो गजः। फलं लक्षणजं हित्वा छायाफलमवाप्नुयात्। नीराजनेऽभिषेके च ध्वजोच्छ्राये रणोदये। तेषु तेषु च कालेषु भवेच्छाया च शोभना। वक्षसि प्रतिमानेऽंसे कुम्भे कर्णे कटेषु च। निर्याणे मस्तकस्थाने वेष्टयोश्च कपोलयोः। पिण्डिकाजवनाभोगे तेषु तेषु पदेषु च। प्रदेशेषु प्रधानेषु छायाया वीक्षणं भवेत्। प्रशस्ता पार्थिवी छाया वह्निजा जलजापि च। नेष्यते व्योमजा छाया मातरिश्वभवापि च। पार्थिवी स्निग्धगम्भीरा सर्ववर्णै विभाव्यते। छाया श्यामा च रक्ता च स्निग्धा जाम्बूनदाग्निजा। छाया नीलाम्बुदाभासा स्निग्धा सलिलसम्भवा। अव्यक्तपरुषा तस्य छाया गगनजा मता। धूम्रा रूक्षा च वायव्या भस्माभा निष्प्रभा तथा। एताश्छायाः परीक्ष्याः स्युर्मातङ्गे राजपूजिते। नीलाम्बुजेन्द्रनीलाभा नीलाञ्जननिभाऽपि च। काम्युक्ता पार्थिवी च्छाया सुभिक्षक्षेमकारिणी। बालार्कपद्मकिञ्जल्कशक्रगोपकसन्निभा। ज्वालाभा तप्तहेमाभा वह्निजा विजयप्रदा। छायाम्मयी पयःशङ्खकुन्दरूप्यनिभद्युतिः। सौम्याख्यया प्रतीता च भर्त्तुरर्थप्रदा सदा। जलबुद्बुदसङ्काशा धूम्रद्युतिरतिस्थिरा। निन्द्या च व्योमजा छायानित्योद्वेगकरी मता। सर्ववर्णैरुपेताऽपि निष्प्रभा भस्मसन्निभा। विच्छिन्ना विकृता च्छाया वायवी सा भयावहा। वैरिञ्ची वैष्णवी शैवी छाया माघवनी तथा। कौमारी राक्षसी सार्पी गान्धर्वी च तथाऽऽसुरी। पैशाची चेति याश्छाया श्छायाद्याः कचित् शुभाः। भूतोत्थलक्षणे तासां भेदो नेह तु कीर्त्तितः। तेजोऽतिसक्ता भद्रस्य पाटला भवति प्रभा। छाया रक्तकला रुक्मपद्मपूर्णनिभाऽपि वा। कृष्णा च मन्दकरिणश्छाया तु मृगहस्तिनः। मल्लिनाथदृष्टेत्र गीर्वाणायुधदर्शना” इति छाया।

“हस्तिनां विविधा ध्वानाश्छिद्रेभ्यः करतोऽपि च। भवन्ति वायुवशतो गात्राणां वेष्टनेन च। प्रयाणे भूमिभिन्ने षु ध्वजे जातिकुलेषु च। नागेषु वृंहितं ग्राह्यं मत्तस्तब्धे न जातिषु। हृषितोऽत्यस्तनिद्रान्तस्तृषितो वृंहति कचित्। यदि दन्ती शुभे देशे समये च वसुप्रदः। दर्शयेद्वृंहितं भद्रं तत्फलं स्फीतमादिशेत्। सरोवरे तथाऽऽरामे गोष्ठे विबुधवेश्मनि। निकुञ्जे हृद्यदेशे हि विज्ञेयः शुभदो ध्वनिः। यात्रायामभिषेके च यज्ञादिसमये तथा। समये चैव पुण्ये च वृंहितं स्याच्छिवप्रदम्। अश्मादिकाष्ठवल्मीकदुष्टस्थाने भयप्रदः। सुनीचे च प्रधूमे च प्रतिश्यायदिनेषु च। अतिशीतेऽतिघर्मे च प्रभाते चाशुभो रवः। भूतले न्यस्तहस्तो हि पर्य्यश्रुनयनो गजः। कूजन् निर्व्यसनं कुर्य्यात् यदि वा नश्यतीश्वरः। करेण वृंहितो नागो दुश्चिन्ताश्रुपरिप्लुतः। आदिशेन्मन्त्रिणो नाशमथ वा पृथनापतेः। व्यायतश्वसहस्तस्य स्रस्ताधोगतचक्षुषः। जघने वामतो बालं तथा निक्षिपतोऽसकृत्। (बालं बालधिम्)। निषीदतो लङ्घयतो हृष्टरोमणो विमूर्च्छितः। वामे निक्षिप्य गण्डूषं वृंहितं स्यादनर्थकृत्। खेभ्यः स्रवति नागानां धमतां यदि शोणितम्। (खेभ्यः छिद्रेभ्यः)तथा मन्यान्तदेशे च प्राणिनां क्षयमादिशेत्। यद्याग्नेयीमुखीभूत्वा प्राच्यां वाऽर्कोदयं प्रति। दन्ती तीक्ष्णरवं कुर्य्यात्तदा स्यात् पावकाद्भयम्। करेण यदि मातङ्गो वृंहमाणः स्तनं स्पृशेत्। आलाने लम्बमानस्तु संयुतिं क्षयमादिशेत्। (संयुतिं युद्धे)। आलाने लम्बमानस्तु शीत्कुर्वन् कुरुते ध्वनिम्। गात्रं प्रोङ्खोलयन्नागस्ततः प्रस्थानमादिशेत्। क्षिप्त्वा करं विषाणस्थं विषमं कूजते यदि। निरीक्षमाणो गगनं हतां दृष्टिमुदाहरेत्। यदाभ्युन्नतवक्त्रेण स्तनस्थानञ्च जिघ्रतः। तथा कुञ्चितहस्तेन मुखं गात्रं च जिघ्रतः। कुर्वतो दक्षिणं हस्तं शनैर्निक्षिपतोऽपि यत्। वृंहितं स्यात्तदिष्टञ्च तथान्योन्यकरस्पृशः। गृहीत्वा शुभवस्तूनि कुङ्कुमादीनि चेद् द्विपः। कुर्य्याच्छब्दं शुभं तेन फलं शुभतरं भवेत्। उच्चैरभिमुखः शान्तो यदा नदति वारणः। अहन्त्यसध्मामानेन तदा तत्र जयो ध्रुवः। सुखेन मण्डूकरवान् कर्णाभ्यां दुन्दुभिध्वनिम्। करेण मुरजारावान् कुर्वन् कल्याणकारकः। कलसादिसमारावा

विकटाश्च समाः स्मृताः”। इति ध्वनिः। गतिबले तु प्रागुक्ते एवात्र प्रायेण दर्शिते नातस्ते अत्रोदाहृते।

“सत्त्वं त्रिविधमिच्छन्ति श्रेष्ठमध्याधमैर्गुणैः। सात्त्विकं राजसं चापि तामसञ्च विषाणिनाम्। एषामपि गुणाश्चैया बहवस्ते न कीर्त्तिताः। सत्त्वस्योक्तागुणाः शौर्य्यं बुद्धिर्धैर्य्यं सुहर्षता। रजसोऽपि गुणास्ते च क्रोधोत्साहावपि क्वचित्। गुणाश्च तमसस्तन्त्रातमोमोहप्रमादिताः। स्त्रीमन्तः कान्तियुक्ताश्च प्राज्ञाश्च चिरजीविनः। क्रियाक्लेशसहाः श्रान्ताः सात्त्विकाः सामसम्मताः। शिष्याश्च मध्यसाध्याश्च कीर्त्तितानिर्भयाः क्वचित्। क्रियायोगसहाः किञ्चिद्राजसा मध्यमायुषः। तामसा दुःखिता मूढा विरूपा लघुजीविताः। युक्तोऽप्यन्यगुणैः सर्वैर्युतश्चेत् सात्त्विकैर्गुणैः। श्रेयोगुणः स समरे तथाऽध्वनि मतङ्गजः। एषां वागीशनिर्दिष्टा विषयापेक्षया स्थितिः। भद्रे सन्निहितं सत्त्वं, रजोमन्दे, तमो मृगे। देवगन्धर्वयक्षाणां पन्नगासुररक्षसाम्। पिशाचानां नृणां तुल्यं वेद्यं नागस्य चेष्टितम्”। इति सत्त्वम्।

“यत् पूर्व्वसम्भवं स्पष्टं सत्त्वं रूपं गतिः स्वरः। तस्यानुकरणात् युक्तमनूकमिति कोविदाः। सत्त्वरूपजवारावैः शुभानुकारिता शुभा। देवर्षिगणगन्धर्व्वनागानूकाः शुभामताः। एवमेव च दुष्टानुकृतोदुष्टाः प्रकीर्त्तिताः। दैत्यरक्षःपिशाचानामनूकं परिवर्ज्जितम्। वृषसिंहतुरङ्गादिसमानूकामता द्विपाः। नेष्टाः खरउष्ट्रादिसमानाकृतियोगिनः”। अनूकम्।

“आस्याक्षिकुम्भकर्णेषु मदनिश्वासवायुषु। शकृन्मूत्रेषु गन्धं समुपलक्षयेत्। दुष्टगन्धान्निषेवेत वारणान् धरणीपतिः। दुष्टगन्धान् सदा भूपोयत्नतः परिवर्ज्जयेत्। सर्पिर्मधुसुरालाजदधिक्षीरानुकारकः। माल्यक्षौमशीरमदिरापद्मकाष्ठादिसन्निभः। मालतीकेतकीजातीचन्दनाधिकसौरभः। सुरसालफलामोगोगन्धोनागस्य सम्मतः। अस्तृक्मूत्रशकृत्पूतिवसाकुणपकुत्सितः। पक्षिनोड़पलाण्ड्वादिसप्रतिम्भविनिर्म्मितः। खरोष्ट्रसूकरसमः श्मशानधूमसन्निभः। मीनमत्कुणतुल्यस्य गन्धोनागस्य दुःखदः”। इति गन्धः।

“पञ्चधा विदितं स्याच्च विज्ञेयं सामजन्मनाम्। अत्यर्थोत्तानगम्भीरप्रत्यर्थान्वर्थभेदतः। यस्तूद्वातादुद्विजते दूराद्दंशादि संकुचेत्। अत्यर्थं सङ्कुचेत् स्पृष्टः स गजोऽत्यर्थवेदिता। योऽपि त्वक्स्पर्शमात्रेण रोमस्पर्शवशेन वा। विद्यादृष्ट्वाङ्कुशादींश्च स स्यादुत्तानवेदिता। त्वग्भेदात् शोणितस्रावात् तीव्रप्रव्यथनादपि। अङ्कुशादीन् विजानाति स हि गम्भीरवेदिता। शनैर्हतोऽभ्यर्थं वेत्ति शनैर्वेत्ति भृशाहतः। विपरीतमतिर्नागो ज्ञेयः प्रत्यर्थवेदिता। प्रत्येति वार्य्यमाणो यो निगृहीतश्च गच्छति। प्रतिलोमायते संज्ञां सोऽपि प्रत्यर्थवेदिता। शनैर्हतः शनैर्वेत्ति भृशं वेत्ति भृशाहतः। प्रत्येति प्रतिषिद्धश्च नोद्यमानश्च गच्छति। यथासंज्ञं विदध्याच्च सर्वकर्माणि योऽद्भुतम्। अन्वर्थवेदिनं प्राज्ञोजानीयात्तं शुभं गजम्” इति विदितम्।

“मतङ्गजेङ्गितं वक्ष्ये शृणु तदवधानतः। शुभश्चानश्च येन स्यात् यात्रादिसमये नृप!। अनुयान्तं गतोहन्यात् किञ्चिद्दृष्टं यदि द्विपः। तज्जयः, प्रतियान्तं तु रूपाहत्य पराजयः। दृष्ट्वा रिपूनभिमुखान् वार्य्यमाणोऽपि चेद्गजः। व्रजेत्तद्विजयोनूनं यदि वा प्राप्तवान् वशे। दक्षिणेनाग्रपादेन क्षितिमुत्पाटयेद्यदि। उत्तोलयेद्वामपादं तदा जयमुदीरयेत्। करेण चाग्रहस्तेन यदा पृथ्वीं प्रमार्जयेत्। सिञ्चत्यनेन कर्णौ च तदा सौख्यं समादिशेत्। पेचकं कुटिलं कृत्वा करं जिघ्रति चेद्द्विपः। प्रहृष्टहृदयाङ्घ्रिश्च तदाभ्युदयमादिशेत्। दक्षिणं तु यदा दन्तं दन्ती प्रमुदितेन्द्रियः। परिमृजति हस्तेन तदा स्यात् प्रियसङ्गमः। तथैव गजसम्बिच्च पुष्करेण पराबृशन्। श्रीयोगमुपयातं तु वारणोविनिवेदयेत्। सङ्कोच्य दक्षिणं पादं वामपादेन वा भुवम्। विलिखेद्वारणः खिन्नस्तद्भर्त्तुः स्यात् पराजयः। यदा तु दुर्मनादन्तं वामं हस्तेन शोधयेत्। तदात्मनोवदेन्नाशं यातुर्वाथ निषादिनः। करेण वामगात्रं च खिन्नगात्रः प्रमार्ष्टि चेत्। तदानिष्टं भवेद्भर्त्तुरन्यथा च शुभं भवेत्। व्यथमानः पतेत् त्रस्तः कक्षवन्धे यदा द्विपः। नाभिनन्देच्च माल्यादि तदा परिभवो भवेत्। अकस्मादेव कुप्यन्ति भ्रमन्ति च पतन्ति च। करिणो यदि तद्विद्यात् विग्रहं समुपस्थितम्। यदा पश्यति मातङ्गोविद्रवञ्च पराजयम्। प्रवासं परराष्ट्रं वा तदा भवति दुर्मनाः। अदंशव्रणपीड़ायां करेण परिवीजनात्। गण्डप्रदेशनिक्षेपात् सव्याजमुपसर्पणात्। अकस्माच्च स्खलद्गत्या धरण्यां प्रणिपातनात्। जलप्रतारवैमुख्यादहितभक्ष्यसेवनात्। स्तब्धकर्णतया गत्या पादाग्रवेशनादपि। द्रुतदद्राद्रिपीलुत्वादकल्याणकरः करी। आत्तपङ्कोजलोत्तीर्णोरिपूणां ग्रहणं वदेत्”इङ्गितम्।

“जायते द्विविधः कोपः संज्ञासंज्ञ विषाणिनाम्।

शिघ्रक्रोधोऽप्यभीष्टः स्यादनिष्टोऽशिघ्ररोषणः । यः क्रुध्यति चिरेणैव मृदुक्रोधो भवेदपि । वाग्दण्डमात्रबन्धैश्च प्रतिषिद्धो न मुह्यति । अनुशाम्यति रोषाच्च स शिघ्रक्रोधसंज्ञितः । इष्यते सर्व्वकार्य्येषु शुभजातिर्मतङ्गजः । यः क्रुध्यत्यचिरेणैव भृशक्रोधो भवेदपि । प्रतिषिद्धश्च वाग्दण्डतोत्त्रप्रजनकाङ्कुशैः । मुह्यत्येव चिरेणापि रोषाद्विरतिमेति च । अशिघ्रक्रोधसंज्ञोऽसौ विज्ञेयो वारणाधमः” इति कोपः । विस्तरस्तु पालकाव्यादौ दृश्यः ।

**इभकणा** स्त्री० इभोपपदा कणा शाक०त० । गजपिप्पल्याम् ।

**इभकेशर** पु० इभमद इव केशरोऽस्य । नागकेशरे “मञ्जिष्ठाकालगुग्गुभकेशरागुरुचन्दनैः” सुश्रु० ।

**इभगन्धा** स्त्री इभस्य गन्ध एकदेशोदन्त इव पुष्पमस्याः । नागदन्त्याम् सा च स्थावरविषभेदः यथा सुश्रुते “मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सारएव च । निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः” इत्युपक्रम्य “कुमुद्वतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा सर्पघातिनन्दनसारपाकादीनि द्वादश फलविषाणि” इति विभज्य “शुष्कशेफः फलविषैर्दाहोऽन्नद्वेष एव चेति” तद्विकारो दर्शितः ।

**इभदन्ता** स्त्री इभस्य दन्तइव शुभ्रं पुष्पमस्याः । गजदन्तशुभ्रपुष्पवत्यां १नागदन्त्याम्, सा च स्थावरफलविषा ।

**इभनिमीलिका** स्त्री इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति । १भङ्गायाम् । इभस्येव निमीलिका । २वैदग्ध्याम्

**इभपालक** पु० इभं पालयति । (माहुत) हस्तिपके ।

**इभपोटा** स्त्री पोटा पुंलक्षणा इभी परनिपातः पुंवद्भावश्च । पुंगजलक्षणयुक्तायां हस्तिन्याम् ।

**इभमर** पु०६त० । गजसमूहे [ सिंहे ।

**इभमाचल** पु० इभमाचलयति आ+चल-णिच्—बा० ख ।

**इभया** स्त्री इभैर्यायते भक्ष्यतया प्राप्यते या—कर्मणि घञर्थे क ३त० । स्वर्णक्षीरीदृक्षे रत्नमाला इभषेति वा पाठः ।

**इभयुवति** स्त्री युवतिरिभी पूर्वनि० पुंवद्भावश्च । युवत्यां हस्तिन्याम् वा ङीप् ।

**इभाख्य** पु० इभस्याख्याख्या यस्य । नागकेशरे त्रिका० ।

**इभानन** पु० इभस्याननमिवाननं यस्य । गजानने गणेशे तस्य यथा तदाननत्वं तथोक्तं “स्वयं गोलकनाथस्य पुण्यकस्य प्रभावतः । पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति । स्वयं देवगणानाञ्च यस्मादीशः कृपानिधिः । गणेश इति विख्यातो भविष्यति जगत्त्रये । “शनिदृष्ट्या शिरच्छेदात् गजवक्त्रेण योजितः । गजाननः शिशुस्तेन नियतिः केन बाध्यते” ब्रह्मवै० पु० ६अ० । शनिदृष्ट्या तच्छिरश्छेदकथा तत्रैव १२अ० । “पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा स्वयम् । पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो । यदि बालो मया दृष्टस्तस्य विघ्नो भवेद् ध्रुवम् । अन्यथा मे प्रलापस्तत्परतः स्यात्मरणम् । इत्यालोच्य च धर्मिष्ठो धर्मं कृत्वा स्वसाक्षिणम् । बालं द्रष्टुमनस्के न बालमातरं शनिः । विषसमानसः पूर्वं शुष्ककण्ठोष्ठतालुकः । सव्यलोचनकोणेन ददर्श च शिशोर्मुखम् । शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने ! । चक्षुर्निवारयामास तस्थौ नम्राननः शनिः” एवं शिरश्छेदमुक्त्वा । “तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः । जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् । पुष्पभद्रानदीतीरे ददर्श काननस्थितम् । गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् । दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात् । परितः शावकान् कृत्वा परमानन्दमानसम् । शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा । स्थापयामास गरुडे रुधिराक्तं मनोहरम्” । गजशिरश्छेदमुक्त्वा तत्पत्न्या स्तुतेन हरिणा तस्य कल्पान्तजीवनं वरोदत्त इत्युपवर्ण्य । “आगत्य बालकस्थानं बालं कृत्वाऽथ वक्षसि । रुचिरं तच्छिरः कृत्वा योजयामास बालके । ब्रह्मस्वरूपी भगवान् ब्रह्मज्ञानेन लीलया । जीवनं योजयामास हुङ्कारोच्चारणेन च । पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोडे च तं शिशुम् । बोधयामास तां नाथ आध्यात्मिकविबोधनैः” “सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्रीः” नैष० । इभवक्त्रमुखगजाननादयोऽप्यत्र । “तं नमामि गजाननम्” माधवः ।

**इभारि** पु० ६त० । सिंहे इभामित्रादयोऽप्यत्र । [शब्दच० ।

**इभोषणा** स्त्री इभोपपदा उषणा शाक०त० । गजपिप्पल्यां

**इभ्य** त्रि० इभं गजमर्हति दण्डा० यत् । १प्रचुरगजादिधनाढ्ये २नृपे ३हस्तिपके च पु० । “उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास” छा०उ० तस्य भाष्ये इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहोवेति । “जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति” ऋ०१, ६५,४, स्वार्थे कन् । इभ्यकस्तत्रैव स्त्रियान्तु टापि वा अत इत्त्वम् इभ्यका—इभ्यिका । धनाढ्यायां स्त्रियाम् ।

**इभ्यतिल्विल** त्रि०इभ्यस्तिल्विलः पुष्टइव । गजादिभिः प्रचुरे आढ्ये । “यदि प्रतीचीयादिभ्यतिल्विल इव शाम्यति-

ल्विलो भविष्यतीति विद्यात्” शत०ब्रा० ४,५,८,११,

**इभ्या** स्त्री इभमर्हति सेव्यत्वेन दण्डा० यत्। १हस्तिन्यां २शल्लकीवृक्षे च मेदि०।

**इमथा** अव्य० इदम्–इवार्थे–थाल् “प्रत्नपूर्वविश्वेमात् थाल् छन्दसि” पा० सू० निर्देशात् नि० इमादेशः। इदानीन्तनतुल्ये। “तं प्रत्नथा पूर्वथा विश्वथेमथा इव ज्येष्ठतातिं बर्हिषदं स्वर्विदम्” ऋ० ५,४४,१। “प्रत्नथा पुरातनयजमाना इव पूर्वथास्मदीया पूर्वे यथा। विश्वथा विश्वे सर्वे प्राणिनो यथा। इमथा इदानीं वर्त्तमाना यजमाना इव” भा० “इयस्तक” यजु०७अ० ११च पठिता।

**इयक्षु** त्रि० यज+सन उ वेदे नि संप्रसारणम्। यष्टुमिच्छौ “धन्वन्निव प्रापा असि त्वमग्न इयक्षवे” ऋ०१०,४,१, वेदे प्रायेण सर्वत्र नि० संप्रसा०। “द्युम्नं वां स्तोरिष्टं णावियक्षन्”१,१५२,२, देवानां इयक्षतो यजमान इयक्षति” ऋ०८, २१,११५,

**इयत्** त्रि० इदं परिमाणमस्य इदम्–वतुप्। एतावदर्थे “नीतं यदि नवनीतं कियदिति यशोदया पृष्टः। इयदिति गुरुजनसविधे विवृतघनिष्ठापयोधरः पायात्” उद्भटः। “इयान् वाव किल पशुर्यावती वपा” ऐत० “इयन्ति वर्षाणि तथा सहोग्रम्” रघुः “इटिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्” सा०द०। अत्र साधनप्रकारः इदम्+परिमाणार्थे वतुप् वस्य घः इदम इश् “यस्येति” पा०प्रकृतीकारलोपे प्रत्ययमात्रस्थितिः। अतएवात्र वैयाकरणा औपनिषदाश्च पठन्ति। “उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे। सपदि पदमुदीतं केवलं प्रत्ययोऽयं तदियदिति मिमीते कोऽद्य पण्डितोऽपि”। स्त्रियां ङीप्।

**इयत्तका** स्त्री कुत्सिता इयत्ता कुत्सितार्थे कन् ह्रस्वः। कुत्सितेयत्तायाम्। ततः अर्श आ० अस्त्यर्थे अच्। कुत्सितेयत्तायुते अल्पप्रमाणे “इयत्तकं कुषुम्भकस्तकं भिनद्म्यश्मना” ऋ० १,१९१,१५,

**इयत्ता** स्त्री इयतो भावः तल्। १सीमायां, २परिमाणे, ३संख्यायाञ्च। “न गुणानामियत्तया” “यशः परिच्छेत्तुमियत्तयालम्” “इयत्तया रूपमियत्तया वा” इति च रघुः।

**इयस्** त्रि० इ–कर्त्तरि असुन् किच्च। १गन्तरि भावे असुन्। २गतौ “तेषां हैयसेवास किमिह कर्त्तव्यम्” शत०ब्रा०२,२,३,२,

**इर्**–ईर्षायां कण्ड्वा०यक् उभ०। इर्यति इर्यते।

**इरज्**–ईर्षायां कण्ड्वादि०यक् प०। इरज्यति। “इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायः” ऋ० १०,१४०,४। “इरज्यन्त यच्छुरुधो विवाचि” ऋ०७,२३,२, यदेषामग्रं जगतामिरज्यसि” ऋ०१०,७५,२। “युवं विप्रस्य मन्मनामिरज्यथः” ऋ०१,१५१,६।

**इरण** त्रि० ईरिण+पृ०। ऊषरभूमौ अमरटीका रमा०।

**इरम्मद** पु० इरया जलेन अन्नेन वा माद्यति वर्द्धते इरा–मद–खच् नि० ह्रस्वः मुम् च। १वज्राग्नौ २वाडवानले च। “इरम्मदं बृहदुक्थं यदत्र” यजु०११,७४।
“इरया अन्नेन माद्यति उग्रं पश्येत्यादि” पा० नि० “वेद० दी०। “बृहते ह्वामहे इत्येतदिरम्मदमितीरया ह्येष मत्तः” शत०ब्रा०६,६,२,४।

**इरस्** इरज्वत् कण्ड्वा०इरस्यति “मात्रपूषन्नाघृण इरस्यः” ऋ०७,४०,६। “यस्मा इरस्यसीदम्” ऋ०१०,८६,२।

**इरा** स्त्री इण्–रक् इं कामं राति रा–क वा। १भूमौ, २वाचि, ३सुरायाम्, ४जले, ५अन्ने च। “इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवी रेतसावति” ऋ० ५,८३, ४। “इरामस्मा ओदनं पिन्वमानाः” शत०ब्रा०६,६,२२। ६कश्यपस्य पत्नीभेदे। “धर्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम्। अदितिर्दितिर्दनुःकाला अनायुः सिंहिका मुनिः। कद्रुः प्राधा इरा क्रोधा विनता सुरभिःखशा” इत्युपक्रम्य “इरा वृक्षलतावल्लीतृणजातीश्च सर्वशः”। असूतेति शेषः। गरुडपु०।

**इराक्षीर** पु० इरा जलं क्षीरमिवास्य। क्षीरसमुद्रे।

**इराचर** न० इरायां जले भूमौ वा चरति चर–ट ६त०। १वर्षोपले त्रिका० २भूचरे ३जलचरे च त्रि० स्त्रियां ङीप्।

**इराज** पु० इरा सुरेव अजति विक्षिपति अज–अच् न वी भावः। कन्दर्पे हला०। [ त्रिका०।

**इराम्बर** न० इरा जलमम्बरमिव यस्य। वर्षोपले करकायाम्।

**इरावत्** इरा+भूम्नि मतुप् मस्य वः। समुद्रे तत्र भवः अण् ऐरावतः। अर्जुनेन नागकन्यायामुत्पादिते २वीरभेदे तदुत्पत्तिकथा” भा०भी० ९१अ०।
“अर्जुनस्यात्मजः श्रीमानिरावान्नाम वीर्य्यवान्। सुषायां नागराजस्य जातः पार्थेन धीमता। ऐरावतेन सा दत्ता ह्यनपत्या महात्मना। पत्यौ हते सुपर्णेन कृपणा दीनचेतना। भार्य्यार्थं ताञ्च जग्राह पार्थः कामवशानुगाम्। एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः। स नागलोके संवृद्धो मात्रा च परिरक्षितः। पितृव्येण

परित्यक्तः पार्थेनैवाहृ रात्मना । रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् । सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः । न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्त्रश्चाहं तव प्रभो ! । मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः । परिष्वज्य सुतञ्चापि सोऽत्मनः सदृशं गुणैः । प्रीतिमानभवत् पार्थो देवराजनिवेशने । सोऽर्जुनेन समादिष्टो देवलोके तदा नृप ! । प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत । युद्धकाले त्वयास्माकं सह्यं देयमिति प्रभो । बाढमित्येवमुक्त्वा च युद्धकाल इहागतः" ।

"इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः" भा०भी० ९२अ० । "पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः ।" ९५ अ० । २नदीभेदे स्त्री ङीप् । भा० स०प०९अ० वरुणसभावर्णने । "इरावती वितस्ता च सिन्धुर्देवनदी तथा" "इरावत्यां कृतो भोजः कार्त्तवीर्यसमो युधि" भा० व० १२अ० "शतद्रुकामहं तीर्त्वा तथा रम्यामिरावतीम्" । भा०क०४४ अ० । "इरावत्यां महाभोजावग्निसूर्यसमौ युधि" हरिवं० १६१ । "इरावती धेनुमती हि भूतं" ऋ०७,९९,३ । ४अन्नादियुक्ते त्रि० "वाविष्ट वर्त्तिरश्विनाविरावत्" ऋ०७,४०५ । "इरावत् हविरन्नादियुक्तम्" भा० । "सुन्दतावन्तः सुभगा इरावन्तोहतप्रभाः" अथ० ७,६०,६ ।

**इरावती** स्त्री इरां भूमिम् अवति अव–बा०कर्त्तृ ङीप् । वटपत्रीवृक्षे, सा हि पाषाणभेदनेनापि भूमिमाच्छादनात् पालयतीति तस्यास्तथात्वम् ।

**इरिकावन** न० इरैव कन् अत इत्त्वम् इरिकाप्रधानं वनम् । क्षुभा० "इरिकादीनि वनोत्तरपदानि संज्ञायाम्" पा० ग०सू० पाठात् न णत्वम् । जलप्रधाने वनभेदे । इरिकादीनि च "इरिका तिमिर समीर कुवेर हरि कर्म्मार" ।

**इरिण** न० ऋ–इन किच्च । १ऊषरभूमौ, २निराबल्ये, ३शून्ये च । "यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्" ऋ०८,४,३ । "यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम्" मनुः ।

**इरिन्** त्रि० इर–कण्ड्वा० णिनि यलोपः । १प्रेरके । "न येषामिरी सधस्थ ईष्ट आ" ऋ०५,८७,३ । २ईश्वरे च ।

**इरिमेद** पु० इरी रोगादीर्म्भकः मेदोनिर्य्यासो यस्य । विट्खदिरे । "इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषप्रहान्" भावप्र० ।

**इरिविल्लिका** स्त्री इरिविल्लेव कन् । "पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिविल्लिकामिति" निदानोक्ते मस्तकस्थे व्रणभेदे । कनभावे इरिविल्लाप्यत्र । "इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्" सुश्रु० ।

**इरेश** पु० ६त० । १वरुणे, २वागीशे, ३भूमिपतौ, ४विष्णौ च

**इर्गल** न०स्त्री अर्गल+पृ० । द्वाररोधके काष्ठभेदे तस्मै हितम् अपूपादि० यत् । इर्गल्यः स इर्गलीयः । तत्साधने द्रव्ये ।

**इर्य्य** त्रि० इर–कण्ड्वा० अच् वेदे नि० न यलोपदीर्घौ । प्रेरके । "यूयं राजानमिर्यं जनाय विभ्वतष्टम्" ऋ०५,५८,४ ।

**इर्व्वारु** स्त्री उर्व्व–आरु पृषो० । (काकुड़) १कर्कट्याम् । २हिंसके त्रि० । "सिंहव्याघ्रवृकतरक्षृक्षद्वीपिमार्ज्जारसृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः" सुश्रुतः । मृगेर्वारुकः मृगहिंसकः । आलु । इर्व्वालुरप्युक्तार्थे ।

**इर्वारु(लु)शुक्तिका** स्त्री इर्वारुः(लुः) शुक्तिकेव स्वयंस्फोटनात् । (फुटी) (स्वयं भिन्नविपक्वकर्कट्याम्) ।

**इल** शयने अक० गतौ क्षेपे च सक० तुदा०पर०सेट् । इलति । ऐलीत् इयेल ईलतुः इलितः इलः ।

**इल** क्षेपणे चुरा०उभ०सक० सेट् । एलयति ते ऐलिलत् त । ऐलयीत् ऐलिष्ट "कथं वातमेलयति कथं न रमते मनः" अथ०१०,७,३७ । "आसां देवतानां यांयां कामयते ता भूतेलयति" शत०ब्रा० १०,२,८,८ ।

**इलविला** स्त्री पुलस्त्यमुनिपत्न्याम् कुवेरजनन्याम् । एतत्सम्बन्धेनैव कुवेरस्य ऐलविल इति नाम ।

**इला** स्त्री इल–क । १भूमौ, २गवि, ३वाचि, ४जम्बुद्वीपस्थनववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । ५ वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपगम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् । तत्र इडाशब्दे उक्तप्रायम् ६ स्वप्रशीले त्रि० ।

**इ(ए)ला** कण्ड्वा० यक् प० अक० सेट् । इ(ए)लायति ।

**इलावृत** न० इला पृथिवीवावृतं निषधादिभिः । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च वर्षम् "पश्चान्माल्यवतः, प्राच्यां गन्धमादनशैलतः । इलावृतं नीलगिरेर्याम्यतो, निषधादुदक्" इत्युक्तचतुःसीमावच्छिन्ने देशेऽस्ति । "माल्यवांश्च

शमकोटिपत्तनाद्रोमकाञ्च किल गन्धमादनः । नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम् । निषधनीलहुगन्धसुमाल्यकैरलमिलावृतमावृतमावभौ । अमरकेलिकुलाय-समाकुलं रुचिरकाञ्चनचित्रमहीतलम्' 'सि० शि० । "एतेन भारतमिलावृतवद् विभाति" माघः । इलावृतस्थपर्व्वतादिवर्णनम् । भाग० ५स्क० १६अ० ।

"एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्व्वतः सौवर्णः कुलगिरिराजोमेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसाहस्रं तावतान्तर्भूम्यां प्रविष्टः । उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयोरम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयोद्विसाहस्रपृथव एकैकशः पूर्व्वस्मात् पूर्व्वस्मादुत्तरोत्तरेण दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति । एवं दक्षिणेनेलावृतं निषधोहेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् । तथैवेलावृतमपरेण पूर्व्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः । केतुमालभद्राश्वयोः सीमानं विदधाते । मन्दरोमेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः । चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्व्वतकेतव इव द्विसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः । ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः । यदुपस्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभाविकानि भरतर्षभ ! धारयन्ति । देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्व्वतोभद्रमिति । येष्वमरपरिवृढाः सहसुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति । मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति । तेषां विशीर्य्यमाणानामतिमधुरसुरभिगन्धबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति । यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति । एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनदी नाम मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दति । तावदुभयोरपि रोधसोर्मृत्तिका तद्रसेनानुविध्यमाना च वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति । यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटकटिसूत्रकुण्डलाद्याभरणरूपेण खलु धारयन्ति । यस्तु महाकदम्बः सुपार्श्वपार्श्वनिरूढस्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः सुमधुराः सुपार्श्वशिखरात् पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति । याह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनु वासयति । एवं कुमुदनिरूढो यः शतवल्शोनाम वटस्तस्य स्कन्धेभ्योनीचीनाः पयोदधिमधुघृतगुडान्नाद्यम्बरशय्यासनाभरणादयः सर्व्व एव कामदुघानदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति । यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयापमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिखरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैदूर्य्यजारुधिहंसर्षभनागकालञ्जरनीरदादयोगिरयो मेरोः कर्णिकाया इव केशरभूतामूलदेशे परित उपक्लृप्ताः । जठरदेवकूटौ मेरुं पूर्व्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रःपृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ । एवमुत्तरतः त्रिशृङ्गमकरौ । अष्टाभिरेभिः परिसृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः । मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति । तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः"। भा० भी० ६अ० जम्बूखण्डविभागे तु ।

"धनुःसंस्थे महाराज ! द्वे वर्षे दक्षिणोत्तरे । इलावृतं मध्यमन्तु पञ्च वर्षाणि चैव ह । उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः । आयुःप्रमाणं चारोग्यं धर्म्मतः कामतोऽर्थतः । समन्वितानि भूतानि तेषु वर्षेषु भारत ! । एवमेषा महाराज ! पर्व्वतैः पृथिवी चिता । हेमकूटस्तु सुमहान् कैलासो नाम पर्व्वतः । यत्र वैश्रवणो राजन् ! गुह्यकैः सह मोदते । अस्युत्तरेण कैलासात् मैनाकं पर्व्वतश्च्यति । हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः । तस्य पार्श्वे महद्दिव्यं शुभं काञ्चनवालुकम् । रम्यं विन्दुसरो नाम यत्र राजा भगीरथः । दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः । यूपा मणिमयास्तत्र चैत्याश्चापि हिर-

ऋषयः । तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः । स्रष्टा भूतपतिर्यत्र सर्वलोकैः सनातनः । उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः । नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः । तत्र दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता । ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते । वस्वौकसारा नलिनी पावनी च सरस्वती । जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी । अचिन्त्या दिव्यसङ्काशाः प्रभोरेवैष संविधिः । उपासते यत्र सत्रं सहस्रयुगपर्य्यये । दृश्यादृश्या च भवति तत्र तत्र सरस्वती । एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः" ।

**इलिनी** स्त्री चन्द्रवंश्यमेधातिथिनृपकन्यायाम् । "मेधातिथेः सुतस्तस्य यस्मात् कण्वोऽभवद् द्विजः । इलिनी नाम यस्यासीत् कन्या वै जनमेजय !" हरिवं०२२अ० ।

**इली** स्त्री इल–गतौ क गौरा० ङीष् । करवाले (काटार)।

**इलीविश** पु० असुरभेदे "न्यविध्यदिलीविशस्य दृढाविश्टङ्गिणमभिनच्छुष्णमिन्द्रः" ऋ०१,२२,१२,

**इलीश** पु० इलीव करवालिकेव शोभते शुभ-ड । करवालिकासदृशावयवे स्वनामख्याते मत्स्यभेदे ।

**इल्लिश** पु० इलीश+पृ० । इलीशमत्स्ये (इलिश) ।

**इल्वल** पु० इल+स्वप्ने वलच्–नि० गुणाभावः । १मत्स्यभेदे २असुरभेदे च मेदि०स च सिंहिकापुत्रभेदः "सिंहिकायां यथोत्पन्ना विप्रचित्तेः सुतास्तथा । दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः । सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः । व्यंशः शल्यश्च बलिनौ नभश्चैव महाबलः । वातापिर्नमुचिश्चैव इल्वलः सृमरस्तथा । आञ्जिको नरकश्चैव (कालनेमि) कालनाभस्तथैव च । राहुर्ज्येष्ठस्तु तेषां वै सूर्यचन्द्रप्रमर्द्दनः" हरि०३अ० । तच्चरितं यथा

"इल्वलो नाम दैतेय आसीत् कौरवनन्दन ! । मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः । स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः । पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु । तस्मै स ब्राह्मणो नादात् पुत्रं वासवसन्निभम् । चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् । तदाप्रभृति राजेन्द्र ! इल्वलो ब्रह्महाऽसुरः । मन्युमान् भ्रातरं छागं मायावी ह्यकरोत्ततः । मेषरूपी च वातापिः कामरूपोऽभवत् क्षणात् । संस्कृत्य च भोजयति ततो विप्रं जिघांसति । स चाह्वयति यं वाचा गतं वैवस्वतक्षयम् । स पुनर्देहमास्थाय जीवन् स्म प्रत्यदृश्यत । ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् । तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् । तामिल्वलेन महता स्वरेण वाचमीरिताम् । श्रुत्वाऽतिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः । तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः । वातापिः प्रहसन् राजन्निश्चक्राम विनाशयन् । एवं स ब्राह्मणान् राजन् ! भोजयित्वा पुनः पुनः । हिंसयामास दैतेय इल्वलो दुष्टचेतनः" भा०व०९६अ०।

३मृगशिरोनक्षत्रशिरःस्थासु पञ्चसु तारासु स्त्रीब०व० । तत्र इन्वका इति पाठान्तरम् । इन्वन्ति प्रीणयन्ति इवि-प्रीणने क्वुन् इदित्त्वात् नुम् क्षिपकादि० न अत इत्त्वम् इति भानुदीक्षितः । तेन इल्वका इति लकारमध्यपाठकल्पनं प्रामादिकमेव । [ ऐन्वीत् । इन्वकाः ।

**इव** व्याप्तौ प्रीणने च इदित् भ्वा०पर०सक० सेट् । इन्वति

**इव** अव्य०इन्व–निरु० क । १सादृश्ये, २उत्प्रेक्षायाम्, ३ईषदर्थे, वाक्यालङ्कारद्योतकता चास्य तत्र उपमायाम् "इवेन नित्यसमासोविभक्त्यलोपश्चेति" वार्त्ति० उक्तेर्नित्यसमासः विभक्तेर्लोपाभावश्च स च समासस्वरार्थ एव । "वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" रघुः । "हंसीव कृष्ण ! ते कीर्त्तिः स्वर्गङ्गामवगाहते" चन्द्रालोकः । एतत्प्रयोगे श्रौती उपमा "श्रौती यथेववाशब्दा इवार्थे वा वतिर्यदि" सा०द०उक्तेः । उत्प्रेक्षायाम् । "गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव" रघुः । "गङ्गाम्भसि सुरत्राण ! कृपाणस्तव निःस्वनः । स्नातीवारिवधूवर्गगर्भपातनपातकी" "मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" सा०द० इवादिशब्दप्रयोगे उत्प्रेक्षाया वाच्यत्वम् । "वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः" सा०द०उक्तेः । वाक्यालङ्कारे "सर्वदा क इव वा सहिष्यते" किरा० "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" शकु० "सृजति सा कियतीमिव न व्यथाम्" नैष० ईषदर्थे "तदस्ति पर्युषितमिव" शत०ब्रा० "आवर्जिता किञ्चिदिव स्तनाभ्याम्" कुमा० ४अवधारणार्थे च । "श्रिये पूषन्निषुकृतेव देवाः" ऋ०१,१८४,३। "इषुकृतेव इवशब्द एवार्थे" भा० । "स्वश्वेव तु वा ईश्वरा" शत०ब्रा०। इवशब्दोऽवधारणार्थे" भा० ।

**इषीका** स्त्री इषीका पृ० । इषीकाशब्दार्थे अमरटीका ।

**इष** गतौ सर्पणे च दिवा०पर०सक०सेट् । १इष्यति, ऐष्यत् । ऐषीत् इषितः एषित्वा । "इष्यन् वाचमुपवक्तेव होतः" ऋ० ९,९४,९ । "योऽभिवात इषितः प्रवाति" अथ० १०,८,३५ । "स तत्कृणोषितस्तूयमग्ने" अथ० ६,२५,५ । "हिन्वानो वाचमिष्यसि" ऋ० ९,६४,९ । इष्का-

यामपि "अप इष्य होतरित्यप इच्छ होतरित्येवैतदाह" शत॰ब्रा॰ २,९,२,१५। गतौ तुदादिरपि इषति निरु॰।
अनु+अन्वेषणे गवेषणे "अन्विष्यन्तस्ततः सीताम्" रामा॰ "यावदेनामन्वेष्यामि" शकु॰। "न रत्नमन्विष्यति मृग्यते हि तत्" कुमा॰। "तस्यान्विष्यन् वेतसगूढं प्रभवं सः" रघुः। स्वार्थे णिच्। तत्रैव "राममन्वेषयामि" सा॰द॰।
प्र+प्रेरणे। "अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम्" भा॰व॰१६ अ॰। "गत्वा प्रैषीच्च रावणम्" भट्टिः "अध्वर्युः प्रेषितो मैत्रावरुणः प्रेष्यति" आश्व॰श्रौ॰। "शौनःशेपं च प्रेष्यति" कात्या॰१२,६,१ "अग्नीषोमाभ्यां छागस्य वपायै मेदसे प्रेष्य" शत॰ ब्रा॰ ३,८,२,२७। घञ् प्रैषः। ण्यत् प्रैष्यः। स्वार्थे णिच्। प्रेषयति प्रेषयामास। "स च मां प्रेषयामास" रामा॰। [ षितः पर्य्येषणा।
परि+सत्कारपूर्व्वकनियोजने पर्य्येष्यति स्वार्थे णिच् पर्य्ये-

इष वाञ्छायाम् तुदा॰पर॰सक॰सेट् वेट् क्तः। १इच्छति, "इच्छामि संवर्द्धितमाज्ञया ते" कुमा॰। इच्छेत् "यदीच्छेद्विपुलान् भोगान्" मल॰ त॰पु॰। "राजान्तेवासिवाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा" या॰स्मृ॰। ऐच्छत् ऐषीत् "ऐषीः पुनर्जन्मजयाय यत्त्वम्" भट्टिः इयेष "इयेष सा कर्त्तुमवन्ध्यमात्मनः" कुमा॰ईषतुः। इच्छन् "किमिच्छन् कस्य कामाय किमर्थमनुसंज्वरेत्" श्रुतिः।
एषिता—ऐष्टा एषित्वा—इष्ट्वा। भावे श इच्छा "आत्मजन्या भवेदिच्छा" न्यायका॰। इष्टः "इष्टोऽसि मे सखा चेति" गीता। कर्मणि इष्यते "चिरात्ताच्छुद्धिष्यते" स्मृतिः। एष्टव्यः एषितव्यः। "एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्" पु॰।
अनु+अन्वेषणे। "तं खनन्त इवान्वीषुः" शत॰ब्रा॰। "हन्त तमात्मानमन्विच्छामो यमन्विष्टा" छा॰उ॰। "अनुपदमन्वेष्टा" पा॰ "वयं तत्त्वान्वेषात् मधुकर! हतस्त्वं खलु कृती" शकु॰
प्रति+ प्रतिग्रहे प्रतीच्छति ( प्रतिगृह्णाति )। "ततः प्रतीच्छ प्रहरेति वादिनी" नैष॰ "स्नुषां प्रतीच्छ मे कन्याम्" प्राप्तौ च "बुद्धौ शरणमन्विच्छ" गीता। स्वार्थे णिच् वेदे॰नि॰ गुणाभावः। इषयति "इच्छं सदा-च रायेष मदन्त इषयेम ज्योतिः" ऋ॰१,१८५,९। "इषयेम इच्छाम" भा॰।
परि+अन्वेषणे च परीच्छति (अन्विष्यति) "भगवन्तं वा कहलैभिरात्विज्यैः पर्य्यैषिषम्" छा॰उ॰।
अभि+सम्यगिच्छायाम् अभीष्टम्।

इष आभीक्ष्ण्ये क्र्यादि॰ पौनःपुन्ये पर॰अक॰ सेट्। इष्णाति इष्णातु इषाण। "इष्णन्निषाणामुं म इषाण सर्व्वलोकं म इषाण" यजु॰ ३१,२२,अ॰। ऐष्णात् ऐषीत्। एषितः एषित्वा। प्रेरणे च। "भिनद्गिरिं शवसा वज्रमिष्णन्" ऋ॰ ४,१७,३। इष्णन् प्रेरयन्" भा॰। इच्छार्थेऽपि "पूर्वीरिषश्चरति मध्व इष्णन्" ऋ॰ १,१८१,६। "मध्वः मधुनः इष्णन् इच्छन्" भा॰। आभीक्ष्ण्यञ्च क्रियापौनःपुन्यम्। क्रिया च धात्वर्थविशेषः स च वाञ्छागत्यादिरेव तस्यैवाभीक्ष्ण्यद्योतनेऽस्य साधुत्वम्
इष गतौ भ्वा॰ उभ॰सक॰ सेट्। एषति ते। ऐषीत् ऐषिष्ट अनु—अनुसरणे। अन्वेषति। "अन्वेषन्तो वनं राजन्" "देशमन्यं दुराचारमन्वैषन् वानरास्तथा" रामा॰।
इष् त्रि॰ इष—इच्छायां क्विप्। १इच्छायुक्ते। इष्टचरः। "विदादूर्जं शतक्रतु विदादिषम्" ऋ२,१२,४। कर्मणि क्विप्। २इष्यमाणे त्रि॰३अन्ने स्त्री "मधुमतीन इषस्कृधि" यजु॰ ७,२, "आश्विनायज्वरीरिषः १,३,१। "इषे त्वोर्ज्जे त्वा" यजु॰ १,१,। इष्यते इष—अन्नम् तदर्थे कर्म्मणि क्विप्। ४एषणीये। "इषस्तुतो महामहे" ऋ॰ ५,५०,५, "इषः एषणीयस्य" भा॰। इष—गतौ भावे क्विप्। ५यात्रायाम् स्त्री
इष पु॰ इष-गतौ क्विप्—इट् यात्रा तस्मिन् मासि जिगीषूणामस्ति अर्श आ॰अच्। सौरे चान्द्रे च आश्विने १मासि। "आवश्ये भाद्रमासे युवतिष्टहगते चार्थलाभः प्रदिष्टः" राजमा॰उक्तेः "सौराश्विनस्य यात्राया अर्थलाभदत्वात्तथात्वम्"। अत एव रघौ "सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्। यात्रायै नोदयामास तं शक्तेः प्रथमं शरत्"। शरत्कालस्य राज्ञां यात्रार्थत्वमुक्तम्। शरदृतुश्च "इषश्चोर्जश्च शरदिति" श्रुत्युक्त आश्विनकार्त्तिकमासरूपःकालः तस्य च सौरत्वमृतुशब्दे वक्ष्यते "आमेखलं सञ्चरतां घनानां छायामिषेः सानुगतां निषेव्य" कुमा॰पाठान्तरम्। "ध्वनिमिषेऽनिषेवणमयत" माघः। तत्र चान्द्रे "इषे मास्यसिते गच्छे नवम्यामार्द्रयोगतः" तिथि॰ देवीपु॰अत्र चान्द्रोगौणः "यच्छरद्यूर्जश्च औषधः पच्यन्ते तेनोह्यैताविषश्चोर्जश्च" शत॰ ब्रा॰ ऋ॰४,३,१,१७, "अन्तर्भूतण्यर्थे भावे घञर्थे क"। २प्रेषणे "इषवान् मम रेजति" ऋ॰१,२९,६, "इषवान् प्रेषणवान्" भा॰। इष—इच्छायां कर्मणि घञर्थे क ३अन्ने न॰निरु॰।
इषणि स्त्री इष—भावे अनि वेदे॰नि॰ गुणाभावः। प्रेषणे

"दुहाना धेनुर्वृजनेषु कारवेत्मना शतिनं पुरुरूपमिषणि" ऋ०२,२,९, इषणि एषणायाम् भा०। सप्तम्या लुक्। लोके तु एषणिः वा ङीप्। इषणिमिच्छति क्यच्। वेदे० नि० इलोपः इषण्यति "ऋतस्य बुध्न उषसामिषण्यन्" । ऋ०३,६१,७, ततः भावे अ। "इषण्या प्रेषणायाम्" "इषणया नः पुरुरूपमाभर" ऋ०८,४९,१८।

**इषव्य** त्रि०इषुणा विध्यति इषौ कुशलो वा यत्। शरक्षेप्तृ, १शरव्ये २शरत्यागकुशले च "आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी" यजु०ऋ०२२,२२ "इषुभिर्विध्यति इषव्यः यद्वा इषौ कुशलः" वेददी० [धातयः" ऋ०९,७९,१,

**इषि** त्रि०इष–कि। इच्छावति "विचिदश्नाना इषयो व्य-

**इषिका** स्त्री इष–गत्यादौ क्वुन् अत इत्त्वम्। इषीकाशब्दार्थे तूलशब्दपरे ह्रस्वः इषिकतूलम्" तदीयतूले।

**इषीका** स्त्री ईष–गत्यादिषु ईकन् कित् ह्रस्वश्च। १गज-नेत्रगोलके। २काशे, ३मुञ्जामध्यवर्त्तितृणे च तदालम्ब्यैव अश्वत्थाम्ना पाण्डववधाय महास्त्रं परित्यक्तम् यथा भा० प० १४अ० "व्यथितात्माऽभवत् द्रौणिः प्राप्तं क्षेममन्यत। तत्र दिव्यमदीनात्मा परमास्त्रमचिन्तयत्। जग्राह च स चेषीकां द्रौणिः सव्येन पाणिना। स तामापदमासाद्य दिव्यमस्त्रमुदैरयत्" इत्युपक्रम्य "ततस्तस्यामिषीकायां पावकः समजायत। प्रधक्ष्यन्निव लोकांस्त्रीन् कालान्तकयमोपमः" इमामिषीकामधिकृत्य कृतोग्रन्थः अण् ऐषीकं भारतान्तर्गतपर्वभेदे "मुञ्जा देषीका तूलमिति" शत०ब्रा० "यदि नडानां यदि वेणूनां यदि वेषीकाणाम्" शत०ब्रा० १,१,४,१९, ४शरशलाकायां ५वीरणकाष्ठिकायाञ्च उज्ज्व० "तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधिनः" रघुः।

**इषिर** त्रि०इष–गतौ किरच्। १गतिशीले। "शं न इषिरो अभिया रातः" ऋ०७,२५,४, "इषिरः गतिशीलः" भा० २चलनशीले च "निसामनामिषिरामिन्द्र! भूमिम्" ऋ०३,३०,९। "इषिरां चलन्तीम्" भा० ४अग्नौ पु० उज्ज्व०

**इषु** पुंस्त्री ईष्यते हिंस्यतेऽनेन ईष–उ ह्रस्वश्च। १वाणे "प्रतिसंहरन्निषुम्" रघुः। "इषुमति रघुसिंहे दंदशूकान् जिघांसौ" भट्टिः। "इषुभिः प्रतियोत्स्यामि" गीता स्त्रीत्वे "तस्य साध्वीरिषवो याभिरस्यति" ऋ०२,२१,४,८। "यामिषुं गिरिशन्त! बिभर्ष्यस्तवे" यजु० १६,२। तत्तुल्यसंख्ये २पञ्चसंख्यान्विते च। पञ्चशरशब्दे वक्ष्यमाणस्य कामशरस्य पञ्चसंख्याकत्वस्यानुसारेण शरशब्देन हि पञ्चसंख्या बोध्यते। "पञ्चपञ्चाष्टसप्तेषु ज्ञेयमोजःसु राशिषु" ज्योति०। ३ वृत्तक्षेत्रान्तर्गते जीवाविधिपरिधिपर्यन्तकृतसरलरेखायाञ्च तदानयनप्रकारः सोदाहरणः लीला०दर्शितो यथा

"ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनोदलितः शरः स्यात्। व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्नं भवतीह जीवा। जीवार्द्धमक्तो शरभक्तयुक्तो व्यासप्रमाणं प्रवदन्ति वृत्ते" उदा० दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता भवेत्। तत्रेषुं वद बाणाज्ज्यां ज्याबाणाभ्याञ्च विस्तृतिम्" न्यासः। व्यासः १०, ज्या ६, अनयोर्योगः १६, अन्तरं ४ तयोर्घातो ६४, तस्य मूलं ८, तेनोनो व्यासः २, दलितः शरः १। तेन १०हस्तव्यासके वृत्तक्षेत्रे यदि जीवमितिः ६ तदा शरमानम् १ एकहस्त इति ज्ञेयम्। ज्ञातशरव्यासके वृत्तक्षेत्रे जीवानयनं यथा व्यासः १० हस्तः, शरः १हस्तः तेनोनितः व्यासः ९, तस्य मूलम् ३। द्वाभ्यां गुणितम् ६, जीवामानम्। ज्ञाताभ्यां ज्याबाणाभ्यां व्यासानयनम्। यथा जीवा ६ तदर्द्धं ३, तस्य वर्गः ९। शरसंख्यया १ भक्तो ९। शरसंख्यया १ योगे व्यासमानम् १०। एवमन्यसंख्यकजीवादौ अनया दिशा शराद्यानयनम्। ग्रहाणां क्रान्तिवृत्त क्षेत्रस्य शरानयनं संक्षेपेण दर्शितम् सि०शि०

"सत्रिराशिग्रहद्युज्यानिघ्नस्त्रिज्योद्धृतः शरः। स्फुटोऽसौ क्रान्तिसंस्कारे दृक्कर्मण्ययनजे तथा" सू०। "अयं संक्षिप्तो गौणप्रकारः। मुख्यस्तु पूर्वं व्याख्यात एव। तथापीह युक्तिमात्रमुच्यते। विषुवद्वृत्तात् क्रान्तिर्भुवाभिमुखी। क्रान्त्यग्राच्छरः कदम्बाभिमुखः। कथं तेन तिर्य्यक्स्थेन सा संस्कार्या। अतः क्रान्त्यग्रे यद्द्युज्यावृत्तं तस्य शराग्रस्य च यदन्तरमृजु तेन संस्कृता सती स्फुटा भवति। तज्ज्याग्रान्तरं कोटिरूपम्। शरः कर्णरूपः। तद्वर्गान्तरपदं द्युज्यावृत्ते भुजः। एतत् त्र्यस्रं दिग्वलनजत्र्यस्रसंभवम्। तत्र सत्रिराशिग्रहक्रान्तिः कदम्बध्रुवस्थलयोरन्तरम्। तज्ज्या भुजः। तद्द्युज्या कोटिस्त्रिज्या कर्णः। यदि त्रिज्ययेयं कोटिस्तदा शरेण केत्युपपन्नम्। कोटिरूपस्यैव शरस्य ध्रुवोन्मुखत्वाज्ज्ययाऽयजं दृक्कर्म कर्त्तुं युज्यते" प्रमि० विस्तरस्तत्रैव "विक्षेपलिप्ताः क्षितिजादिकानां खेशा ११० द्विवाणेन्दुमिता १५२ रसाश्वाः ७६। षट्नेन्दवः १२६, खाग्निभुवः १३० सितज्ञपातौ स्फुटौ स्वस्वकेन्द्रयुक्तौ" मू० "क्षितिजस्य खरुद्रमिता ११० मध्यमा

विक्षेपलिप्ताः। बुधस्य द्विबाणेन्दुमिताः १५२। गुरोः षट्सप्ततिः ७६। शुक्रस्य षड्विंश १२६ तुल्याः। शनेः खनेन्दु १२० मिता वेदितव्याः। तथा बुधशुक्रयोर्यौ गणितागतौ पातौ तौ स्वस्वशीघ्रकेन्द्रेण युक्तौ कार्यौ। एवं स्फुटौ स्तः। अत्रोपपत्तिः। मध्यमगतिवासनायां वेधप्रकारेण वेधवलये ग्रहविक्षेपोपपत्तिर्दर्शितैव। किन्त्वन्त्यफलज्यार्धधनुषा सत्रिभेनेष्टेन तुल्यं यदा शीघ्रकेन्द्रं भवति तदा त्रिज्यातुल्यः शीघ्रकर्णो भवति तस्मिन् दिने वेधवलये यावान् परमो विक्षेप उपलभ्यते तावान् ग्रहस्य परमो मध्यमविक्षेपः। एवमेते भौमादीनामुपलब्धाः पठिताः। अथ बुधशुक्रयोः पातस्य स्फुटत्वमुच्यते। भगणाध्याये ये बुधशुक्रयोः पातभगणाः पठितास्ते स्वशीघ्रकेन्द्रभगणैरधिकाः सन्तो वास्तवा भवन्ति। ये पठितास्ते स्वल्पाः कर्मलाघवेन सुखार्थम्। अतः पठितचक्रभवौ स्वशीघ्रकेन्द्रयुतौ वास्तवभगणनिष्पन्नौ स्फुटौ भवतः। तथा चोक्तं गोले। "ये चात्र पातभगणाः पठिता ज्ञभृग्वोस्ते शीघ्रकेन्द्रभगणैरित्यादि"। इदानीं ग्रहविक्षेपानयनमाह" प्रमि०। "मन्दस्फुटात् खेचरतः स्वपातयुक्ताद्भुजज्या पठितेषुनिघ्नी। स्वशीघ्रकर्णेन हृता शरः स्यात् सपातमन्दस्फुटगोलदिक्कः" मू०। "मन्दस्फुटाद्ग्रहात् स्वपातयुक्ताद्भुजज्या साध्या। सा ग्रहस्य पठितेन शरेण गुण्या स्वशीघ्रकर्णेन भाज्या फलं स्फुटविक्षेपः स्यात्। सपातो मन्दस्फुटो ग्रहो यदि राशिषट्कादूनस्तदोत्तरो विक्षेपोऽन्यथा दक्षिणः। अत्रोपपत्तिः। मन्दस्फुटो ग्रहः स्वशीघ्रप्रतिमण्डले भ्रमति। तत्र च तस्य पातोऽपि। पातो नाम प्रतिमण्डलविमण्डलयोः संपातः। तस्मादारभ्य विक्षेपप्रवृत्तिः। इह सुसरलवंशशलाकया कक्षामण्डलं तत्प्रतिमण्डलं च छेद्यकोक्तविधिना विरचय्य तत्र शीघ्रप्रतिमण्डले मेषादेः प्रतिलोमं पातस्थानं च चिह्नयित्वा तत्र विमण्डलं निवेश्यम्। पातचिह्नाद्राशिषट्कान्तरे विमण्डलप्रतिमण्डलयोरन्यं सम्पातं कृत्वा पातात् पूर्वं त्रिभेऽन्तरे पठितविक्षेपप्रमाणेन प्रतिमण्डलादुत्तरतो विमण्डलं केनचिदाधारे स्थिरं कृत्वा मेषादेरनुलोमं मन्दस्फुटं ग्रहं प्रतिमण्डले विमण्डले च दत्त्वा विक्षेपोपपत्तिं दर्शयेत्। तत्र तयोर्ग्रहयोर्यावान् विप्रकर्षस्तावांस्तत्र प्रदेशे विक्षेपः। अथ तस्यानयनम्। पातस्थाने हि विक्षेपाभावः। ततस्त्रिभेऽन्तरे परमो विक्षेपः। अन्तरेऽनुपातेन। अतः पातग्रहचिह्नयोरन्तरं तावज्ज्ञेयम्। तच्च तयोर्योगे कृते भवति। यतो मेषादेरनुलोमं ग्रहो दत्तः। पातस्तु प्रतिलोमम्। अतस्तयोर्योगः शरार्थं किल केन्द्रम्। तस्य दोर्ज्या साध्या। यदि त्रिज्यातुल्यया दोर्ज्यया पठितविक्षेपतुल्यं प्रतिमण्डलविमण्डलयोरन्तरं लभ्यते तदाऽभीष्टया ग्रहस्थानभवया दोर्ज्यया किमिति फलं शीघ्रकर्णाग्रे विक्षेपः। अथ द्वितीयोऽनुपातः। यदि शीघ्रकर्णाग्रे एतावान् विक्षेपस्तदा त्रिज्याग्रे क इति। अत्र गुणभाजकयोस्त्रिज्यातुल्ययोस्तुल्यत्वान्नाशे कृते सति दोर्ज्यायाः पठितविक्षेपो गुणः शीघ्रकर्णो हरः। फलं कक्षाप्रदेशे विक्षेपो ज्यारूपस्तस्य चापं स्फुटविक्षेप इत्यर्थः। भूचिह्ने सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं विमण्डले ग्रहस्थाने निबद्धं सूत्रं कर्णः। सूत्रकक्षमण्डलयोरन्तरं स्फुटः शर इत्यादि सर्वं ज्ञात्वा दर्शनीयम्। इदानीं विक्षेपस्य क्रान्तिसंस्कारयोग्यतालक्षणमन्यत् स्फुटीकरणमाह"। प्रमि० "त्रिज्यावर्गाद्यनवलनज्याकृतिं प्रोह्य मूलं यष्टिर्यष्ट्या द्युचरविशिखस्ताडितस्त्रिज्ययाप्तः। यद्वा राशित्रययुतखगद्युज्यकाघ्नस्त्रिमौर्व्या भक्तः स्पष्टो भवति नियतं क्रान्तिसंस्कारयोग्यः" मू०। ग्रहस्य "युतायनांशोडुपकोटिशिञ्जिनीत्यादिनायनं वलनं साध्यम्। अत्र वलनशब्देन वलनज्या ग्राह्या न धनुः। तथा इतः प्रभृति दृग्ज्याभिः कर्म कर्तव्यम्। यतो दृग्ज्याभिः शरज्या शरकलातुल्यैव भवति। तस्यानयनम्। वलनस्य वर्गं त्रिज्यावर्गादपास्य यन्मूलं लभ्यते तद्यष्टिसंज्ञं ज्ञेयम्। तया यष्ट्या ग्रहविक्षेपो गुणितस्त्रिज्यया भक्तः स्फुटः क्रान्तिसंस्कारयोग्यो भवति। अथानुकल्प उच्यते। यद्वा राशित्रययुतखगद्युज्यकाघ्न इति राशित्रययुतस्य ग्रहस्य यावती द्युज्या तया वा गुण्यस्त्रिज्यया भक्तः स्फुटो भवति। अत्र भाजकस्यैकत्वाद्गुणकस्यान्यत्वात् फलं स्वल्पान्तरमित्यतोऽनुकल्पेनोक्तम्। अत्रोपपत्तिः। क्रान्त्यग्रात् किल शरो भवति। शराग्रे ग्रहः क्रान्तिः शरेण संस्कृता स्फुटा भवति। अत्र गणितागतेनैव शरेण क्रान्तिः स्फुटा क्रियते तदयुक्तम्। यतः क्रान्तिर्विषुवन्मण्डलात् तिर्यग्ध्रुवाभिमुखी। विक्षेपस्तु क्रान्तिमण्डलात् तिर्यग्रूपः कदम्बाभिमुखः। यथोक्तं गोले। "सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः। विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा"। सर्वतः क्षेपसूत्राणां ध्रुवाज्जिनलवान्तरे। योगः कदम्बसंज्ञोऽयं ज्ञेयो

वलनवोधकम् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्तं चेति” । अतो विक्षेपः कदम्बाभिमुखो भवति । ध्रुवाभिमुख्या क्रान्त्या सह कथं तस्य भिन्नदिक्कस्य योगवियोगावुचितौ । तयोर्यद्भिन्नदिक्कं तदायनवलनवशात् । अथ तद्गोलोपरि प्रदर्श्यते । यथोदितं गोलं विरचय्य क्रान्तिवृत्ते यद्ग्रहचिह्नं तस्मात् परितो नवतिभागान्तरेऽन्यत् त्रिज्यावृत्तं निवेश्यम् । अथ ग्रहचिह्नाद्ध्रुवोपरिगामि सूत्रं तस्मिन् वृत्ते यत्र लगति तत्कदम्बयोरन्तरस्य ज्या त्रिज्या स कर्णः । तयोर्वर्गान्तरपदं कोटिः । सा च यष्टिसंज्ञा । क्रान्त्यग्राद्विक्षेपः कदम्बाभिमुखः कर्णरूपः । तस्य कोटिरूपकरणायानुपातः । यदि त्रिज्याकर्णे यष्टिः कोटिस्तदा शरकर्णे का । फलं क्रान्तिसंस्कारयोग्यो विक्षेपो भवति । तेन संस्कृता क्रान्तिः स्फुटा । विक्षेपाग्रस्थस्य ग्रहस्य विषुवन्मण्डलस्य च यद्याम्योत्तरमन्तरं सा स्फुटा क्रान्तिरुच्यते अथानुकल्पेऽपीयमेव वासना । अत्र सत्रिराशिग्रहक्रान्तिज्या भुजस्थाने कल्पिता स भुजः । तद्द्युज्या यष्टिस्थाने कल्पिता सा कोटिः । तत्रापि त्रिज्या कर्ण इति सर्वमुपपन्नम्” प्रमि० । तत्रैव स्थानान्तरेऽप्युक्तम् ।

“नाड़िकामण्डलात् तिर्य्यगत्रापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः । क्षेपवृत्तावधिस्तिर्य्यगेवं स्फुटो नाड़िकावृत्तखेटान्तरालेऽपमः” मू० ।“क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाड़िकावृत्तात् तिर्य्यगन्तरं सा क्रान्तिः अथ विमण्डले च यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद्यत् तिर्य्यगन्तरं स विक्षेपः । अथ विमण्डलस्थग्रहस्य नाडीवृत्ताद्यत् तिर्य्यगन्तरं सा स्फुटा क्रान्तिः” प्रमि० ।

३ सामवेदविहिते यज्ञभेदे । “इषवज्रौ सामवेदे विहितौ” सि०कौ० । इषुप्रकारः स्थूला० कन् । इषुकः शरप्रकारे

**इषुकामशमी** स्त्री पुरीभेदे “पूर्व्वेषुकामशमी” सि०कौ० ।

**इषुकार** पु० इषुं करोति कृ—अण् उप० । वाणकारके शिल्पिभेदे “पिङ्गला कुररः सर्पः सारङ्गोऽन्वेषणं विना । इषुकारः कुमारी च षडेते गुरवो मम” बौद्धेनोक्तं समर्थयितुं पिङ्गलादीनां यथोपदेशकारित्वात् गुरुत्वं तथा वर्णितम् यथा । “आशा बलवती राजन् ! नैराश्यं परमं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला । सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागं तु कुररः सुखमेधते । गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते । सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिसमाश्रिताः । अयत्नेनैव जीवन्ति सारङ्गा इव पक्षिणः । इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नाववुद्धवान्” बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम् । “एकाकी विचरिष्यामि कुमारीशङ्खको यथा” भा० शा० प० अ० १७८ इषुकृदादयोऽप्यत्र ।

**इषुकृत** त्रि० इषुरिव शीघ्रगामी ऋजुगामी वा कृतः । वाणतुल्यं शीघ्रगामितया ऋजुगामितया च कृते । “श्रिये पूषन्निषुकृतेव देवा नासत्या” ऋ० १८४,३ । इषुकृतेव इवशब्द एवार्थे । आजिधावनाय इषुवच्छीघ्रऋजुगामिनौ कृताविव सन्तौ” भा० इषुकृता इव नासत्या इत्यादौ सर्वत्र छान्दस आ । एतेन इषुकृच्छब्दस्योदाहरणतया एतस्या ऋच उपन्यासः प्रामादिक एव ।

**इषुध** शरधारणे कण्ड्वा प० अक० सेट् । इषुध्यति ऐषुध्यीत् इषुध्यिता–इषुधिता । याच्ञायामपि “विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसि” ऋ० ६,५०,१ । पतिं वो अघ्न्यानां धेनूनामिषुध्य” ऋ० ८,५८,२ । भावे अ । इषुध्या प्रार्थनायां स्त्री । “दिवोवास्तोष्महुरस्य वीरैरिषुध्येव मरुतो रोदस्योः” ऋ० १,१२२,१ । उण् इषध्यु प्रार्थके “इषध्यव ऋतसापः पुरन्धीः” ऋ० ५,४१,६ ।

**इषुधर** पु० इषुं धरति धृ—अच् ६त० । बाणधरे इषुभृदादयोऽप्यत्र । “यशांसि सर्वेषुभृतां निरास्थत्” भट्टिः ।

**इषुधि** पुं स्त्री० इषवो धीयन्तेऽत्र धा–कि इषुध–इन् यलोपो वा । बाणाधारे बाणधारके वा तूणे । स्त्रीत्वे “धनुर्गाण्डीयमादाय तथाऽक्षय्ये महेषुधी” भा० व० । २८अ० । निषङ्गेण इषुधीरसक्तः” ऋ० १,३३,३ । पुंस्त्वे “बद्धाऽऽक्षय्यौ महेषुधी” रामा० । “बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य” । “इषुधिः सङ्का पृतनाश्च” ऋ० ६,७५,५ । “बहव इषवो धीयन्ते इषूणां निधानत्वात् “इषुधिरिषूणां निधानम्” यास्कः” भा० ।

**इषुप** पु० इषुं पिबति पा० पाने क उप० स० । असुरभेदे सहि अंशावतारे नग्नजिन्नामा राजासीत् यथाह भा० आ० ६७अ० “इषुपोनाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीत् भुवि विख्यातविक्रमः” ।

**इषुपुङ्खा** स्त्री इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खावृक्षे ।

**इषुपुष्पा** स्त्री इषुरिव पुष्पमस्याः । शरपुष्पायाम् ।

**इषुमत्** पु० इषवः सन्त्यस्य प्राशस्त्येन मतुप् । प्रशस्तबाणधरे । “इषुमति रघुसिंहे दन्दशूकान् जिघांसौ” भट्टिः ।

**इषुमात्र** न॰ इषुः प्रमाणमस्य इषु+मात्रच्। १शरप्रमाणे कुण्ड-वेदिनां २कुण्डे कुण्डशब्दे विवृतिः। ३इषुप्रमाणमात्रे त्रि॰ स्त्रियां ङीप्। "यद्येकः पशुः स्यात् एकप्रादेशां कुर्य्यात् अथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्य्यादिषुमात्रीं वा वीर्य्यं वा इषुर्वीर्य्यसम्मितैव तद्भवति। पञ्चप्रादेशा ह्येव त्वेव पुरेषुर्भवति" शत॰ब्रा॰ ६,५,२,१०। इदमुखा-मधिकृत्य प्रवृत्तम्। उखां करोतीत्युपक्रम्य "पञ्चप्रादेशा मिषुमात्री वा तिर्य्यक् पञ्चपशौ" कात्या॰ १६,२,२५, उक्तेः। इषुमानं च अङ्गुल्यवधिबाहुमूलपर्य्यन्तमानं तच्च प्रादेशत्रयम् याज्ञिकसम्प्रदायप्रसिद्धम्। ४शरगतिपर्य्य-न्तमाने च। "अथ यदब्रवीत् वर्द्धस्वेति। तस्मादु ह स्मेषु-मात्रमेव तिर्य्यक् वर्द्धते इषुमात्रं प्राङ्सोऽवैवावरं समु-द्रम् दधावव" शत॰ब्रा॰ १,६,३,११ इत्साहुरवर्द्धन प्रकारः। "इषुमात्रं धनुषः सकाशात् बलात् प्रयुक्तेषु-र्यावद्दूरं गच्छति तावन्मात्रं प्रतिचक्षं तिर्य्यक् उभय पार्श्वतः अवर्द्धत" भा॰। शरविक्षेपप्रमाणञ्च। इषु-विक्षेपशब्दे दृश्यम्।

**इषुविक्षेप** पु॰ इषोर्विक्षेपयोग्यदेशः। सार्द्धशतहस्तमिते शरविक्षेपयोग्ये देशे तन्मानमाह आ॰त॰ पितामहः "मध्यमेन च चापेन प्रक्षिपेच्छरत्रयम्। हस्तानाञ्च शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः। तत्प्रमाणदेशातिक्रमेणैव पुरीषोत्सर्गः कार्य्यः। "ततः कल्यं समुत्थाय कुर्य्यात् मैत्रं नरेश्वर! नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः"। मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गं इषुविक्षेप मतीत्य इषुविक्षेपयोग्यदेशाद्बहिः" आ॰त॰ रघु॰।

**इषेत्वक** पु॰ इषे त्वा इतिभागोऽस्त्यत्रानुवाके अध्याये वा गोपमा॰ वुन्। इषेत्वा इतिशब्दयुक्ते अनुवाके अध्याये च। स च यजुर्वेदीयः प्रथमाध्यायः तत्रादौ इषे त्वो-र्ज्जेत्वेति शब्दयत्त्वात् तस्य तथात्वम् एवं तदन्तर्गतोऽनु-वाकोऽपि तथा।

**इष्कर्त्तृ** त्रि॰ निस्+कृ—तृच् "निशब्दोबहुलमिति" प्राति-शाख्यसूत्रेणोपसर्गैकदेशनकारलोपः। निष्कर्त्तरि। "इष्कर्त्तारमध्वरस्य प्रचेतसम्" ऋ॰ १०,१४०,५। इष्कृदादयोऽप्यत्र।

**इष्कृति** स्त्री निस्+कृ—क्तिन् इष्कर्त्तृवत् नलोपः। गर्भान् निष्क्रमकारिण्यां मातरि जनन्याम्। "इष्कृतिर्नाम वो माता वोयूयं स्थ निष्कृती:" यजु॰ १२,८३,। "इष्-कृतिर्नाम निष्कृतिनाम्नी माता जननी" वेददी॰।

**इष्ट** त्रि॰ इष—कर्मणि क्त। १अभिलषिते, २प्रिये "इष्टोऽसि सखा चेति गीता॰ च। यज भावे क्त। ३यज्ञादौ न॰ कर्मणि, क्त। ४पूजिते ५एरण्डवृक्षे पु॰। ६संस्कारे न॰। "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते। अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टमिति स्मृतम्" जातूकर्णोक्ते ७धर्म्म-कार्य्ये न॰। इष्टञ्च इच्छाविषयः तच्च द्विविधं गौणं मु-ख्यञ्च। तत्र इतरेच्छानधीनेच्छाविषयोमुख्यं तत्साधनं गौणम्। तत्र मुख्यमिष्टं सुखं दुःखाभावश्च। तदिच्छाया इतरेच्छानधीनत्वात्। तत्साधनं पाकभोजनादि गौणं सुखदुःखाभावेच्छयैव तदिच्छायाः समुन्मेषात् अ-धिकमिच्छाशब्दे ९१३ पृष्ठे उक्तम्। तत्रेच्छाविषये "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्"। "अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्म चोच्यते"। "इष्टं हि वो देवा दास्यन्ते यज्ञ भाविताः" इति च गीता। यज्ञे "पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम्" माघः इष्टं यागः इष्टमभीष्टं कर्त्तुमल-न्तरामित्यर्थः। "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात्" देवलः। इष्टं यजनम्" शु॰त॰रघु॰ दृक्ते च "यज्ञैरिष्टं क्रतुशतम्" विक्रमो॰ स्मृतिपरिभाषिते इष्टकर्म्मणि द्विजातीनामेवाधिकारः न स्त्रीशूद्रयोः यथाह "इष्टमुक्तं द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके" जातूकर्णः "वैदिके वेदसाध्ये अग्नि-होत्रादाविति" रत्नाकरः। "पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्याम् वृद्धानाथाऽति-थीन् स्त्रियः" इत्यस्मृतिवचने स्त्रिया पूर्त्तमात्रेऽधिकार-विधानात् तत्र "जलाशयोत्सर्गरूपपूर्त्ते गोरवतारणानुम-न्त्रणयोयजमानकर्तृकमन्त्रपाठ विधानात् तत्र अमन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽपि तयोर्नाधिकारः विशेषोपदेशाभावात्" इति द्वैतनिर्णयानुसारिणः। वृषोत्सर्गे तदङ्गहोम इव ब्राह्मण द्वारा तन्मन्त्रपाठसम्भवात्तयोरपि तत्राधिकारः इति रघुनन्दनादयः। "अमन्त्रस्य तु शूद्रस्य विप्रोमन्त्रेण गृह्यते" वराहपु॰ "तस्मुतमङ्गतञ्चाग्नौ न स्त्री जुहुयादनुपेतः" आप॰ वचनं तु स्वयंहोमविषयम्। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" याज्ञ॰ श्रौत इव स्मार्त्तेऽपि कर्म्मणि ऋत्विग्वरणोक्तेः। अतएव "ऋ-त्विग्वादे नियुक्तस्य समौ संपरिकीर्त्तितौ। यज्ञे स्वाम्याप्नु-

दात् पुण्यं हानिं वादेऽथ वा जयमिति" वृह० उक्ते :९ "श्रौते कर्मणि न० "उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च" यजु० १५,५४ इष्टापूर्त्ते श्रौतस्मार्त्ते कर्मणी" वेददी० । १० इच्छया कल्पिते त्रि० "इष्ट-कृतिरष्टगुणिता व्येका दलिता विभाजितेष्टेन" लीला० ११यज्ञेन तोषिते परात्मनि १२विष्णौ च पु० "इष्टो-विशिष्टः शिष्टेष्टः" विष्णु स० "इष्टः परमानन्दात्मकत्वेन प्रियः यज्ञेन पूजितो वेति" भा० । यज—करणे वा० क्त, भावे क्त अस्त्यर्थे अच् वा । १३ इष्टकायां न० । "मरुतार्केण शुध्यन्ति पक्वेष्टचितानि च" विष्णु०।

**इष्टकचित** त्रि० इष्टकया चितः ह्रस्वः । इष्टकाभिर्व्याप्ते

**इष्टकर्मन्** न० इष्टप्रसिद्ध्यर्थं कर्म शाक०त० । लीलावत्युक्ते गणितभेदे तत्प्रकारो यथा "अथेष्टकर्मसु करणसूत्रं वृत्तम् "उद्देशकालापवदिष्टराशिः क्षुण्णो हृतोंऽशैरहितो युतो वा । इष्टाहतं दृष्टमनेन भक्तं राशिर्भवेत् प्रोक्तमितीष्ट कर्म । अत्रोद्देशकः । पञ्चघ्नः स्वत्रिभागोनो दशभक्तः सम-न्वितः । राशित्र्यंशार्द्धपादैः, स्यात् कोराशिर्द्व्यूनसप्ततिः । न्यासः गुणः ५ । स्वत्रिभागः १/३ । हरः १० । राश्यंशाः १/३ १/२ १/४ । दृश्यम् । ६८ । अत्र किल कल्पित-राशिः ३ । पञ्चघ्नः । १५ । स्वत्रिभागोनः । १० । दश-भक्तः । १ । कल्पित ३ राशेस्त्र्यंशार्द्धपादैः ३/३ ३/२ ३/४ समन्वितोहरोजातः १७/४ । अथ दृष्टम् ६८ इष्टेन ३ गुणितम् २०४ । हरेण १७/४ भक्तं जातोराशिः । ४८ । एवं सर्वत्रोदाहरणे राशिः केनचि-द्गुणितोभक्तोवा राश्यंशेन रहितोयुतोवा दृष्टस्तत्रेष्टं राशिं प्रकल्प्य तस्मिन्नुद्देशकालापवत्कर्मणि कृते यत्सिम्पद्यते तेन भजेद्दृष्टमिष्टगुणं फलं राशिः स्यात् । तत्र इष्टजात्यु-दाहरणम् । यूथार्द्धं सत्रिभागं वनविवरगतं कुञ्जराणाञ्च दृष्टं षड्भागश्चैव नद्यां पिबति च सलिलं सप्तमांशेन मिश्रः । पद्मिन्या चाष्टमांशः स्वनवमसहितः क्रीड़ते सानुरागोनागेन्द्रोहस्तिनीभिस्त्रिसृभिरनुगतः का भवेद्यूथ-संख्या । न्यासः

१/२ १/६ १/८ दृश्यम् ४ । एषां सवर्णने
१/३ १/७ १/९ द्वाभ्यामपवर्त्तितं २/३ ।४/२१।
५/३६ । पुनरेषां सवर्णितानामैक्यं नवभिरपवर्त्तितं २५१/२५२ इष्टोनं १/२५२ अनेन ४ दृष्टे इष्टगुणिते भक्ते जाता हस्तिसंख्या १००८ । अपरोदाहरणम् । अमलकमलराशेस्त्र्यंशपञ्चांशषष्ठैस्त्रिनयनहरिसूर्या येन तु-र्येण चार्या । गुरुपदमथ षड्भिः पूजितं शेषपद्मैः सकलकमलसंख्यां क्षिप्रमाख्याहि तस्य । न्यासः १/३ १/५ १/६ १/४ दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्राग्वज्जातोराशिः । १२० । अन्यदुदाहरणम् । हारस्तारस्तरुण्यानिधुवनकलहे मौक्तिकानां विशीर्णोभू-मौ यातस्त्रिभागः शयनतलगतः पञ्चमांशोऽस्य दृष्टः । प्राप्तः षष्ठः सुकेश्या गणक ! दशमकः संगृहीतः प्रियेण दृष्टं षट्कञ्च सूत्रे कथय कतिपयैर्मौक्तिकैरेष हारः । न्यासः १/३ १/५ १/६ १/१० दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्राग्वज्जातोराशिः ३० । अथ शेषजात्युदाहरणम् । स्वार्द्धं प्रादात्प्रयागे नवलवयुगलं योऽवशेषाच्च काश्यां शेषाङ्घ्रिं शुल्कहेतोः पथि दशमल-वान् षट् च शेषाद्गयायाम् । शिष्टा निष्कत्रिषष्टिर्नि-जगृहमनया तीर्थपान्थः प्रयातस्तस्य द्रव्यप्रमाणं वद यदि भवता शेषजातिः श्रुतास्ति । न्यासः ।

१/१ दृश्यम् ६३ । अत्र रूपम् १ राशिं प्रकल्प्य
१/२ भागान् शेषान् शेषादपास्य अथवा भागा-
२/९ पवाहविधिना सवर्णिते जातम् । ७/६०
१/४ अनेन १इष्टगुणिते ६३ दृष्टे । भक्ते जातं
६/१० द्रव्यप्रमाणम् । ५४० । इदं विलोमसूत्रे-णापि सिध्यति । अथ विश्लेषजात्युदाहरणम् । "पञ्चां-शोऽलिकुलात्कदम्बमगमत्त्र्यंशः शिलीन्ध्रं तयोर्विश्लेष-स्त्रिगुणोमृगाक्षि ! कुटजं दोलायमानोऽपरः । कान्ते ! केतकमालतीपरिमलप्राप्तैककालप्रियादूताहूतइतस्ततोभ्रम-ति खे भृङ्गोऽलिसंख्यां वद । न्यासः १/५ १/३ २/५ दृश्यम् ।१। जातःलिकुलमानम् ।१५। एवम् अन्यत्रापि"।

**इष्टका** स्त्री इष—तकन् टाप् इष्टकेषीकामालानाम्" पा० निर्द्देशाचात इत्त्वम् । (इट्) मृदादिनिर्म्मिते १मृत्खण्डभेदे यज्ञिये अग्निचयनार्थे २मृदादिनिर्मिते द्रव्यभेदे च शत० ब्रा० तु निर्वचनान्तरमुक्तं यथा । "यावद्यावद्वै जुहुयात्ता-वत्तावत् भवतीति तद्यस्मा इष्टे कमभवत्तस्मादिष्टका" ६,१, २,२२ । "तं देवा अग्न्योराहुतिभिरभिषज्यन् ते यांयामा-हुतिमजुहवुः सासैनं पक्वेष्टका भूत्वा समपद्यत तद्यदिष्टात् कमभवत्तस्मादिष्टकास्तस्मादग्निना इष्टकाः पचन्त्याहु-तीरेवैनास्तत् कुर्वन्ति" इति च तत्रैव । इष्टकाकरणकाल-प्रकारादि" कात्या० श्रौ० १६,२क० दर्शितं यथा । "उखासम्भरणमष्टम्याम्" १सू०। "उखायाः सम्भरणमुखा-सम्भरणम् अष्टम्यां भवति "अष्टकायामुखां सम्भरतीति

( ६,२,२,२३ ) शत०ब्रा० वचनात् । उखा चोपलक्षणम् अषाढाद्यप्यत्र सम्भ्रियतएव ततश्चान्तराले तस्या अपि प्रयोक्तृत्वम् । सम्प्रदायस्तु फाल्गुनकृष्णाष्टम्याम्" कर्कः "आहवनीयस्य पुरस्तान्मत्या चतुरश्रे श्वभ्रे मृत्पिण्डमवदधाति भूमिसमम्" २सू० । "भूमिसममन्यूनानतिरिक्तम्"क०। "पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति"३सू०। 'पिण्डाहवनीययोर्व्यध्वे अर्धपथे"क०। 'व्यध्वे पिण्डाहवनीययोर्मध्ये, वल्मीकवपाम् उपदीकाकृतस्य मृद्व्ययस्य वपामिव वपाम् अन्तःपुटां छिद्रां छिद्रसंयुक्ताम्" संप० । "आहवनीयं दक्षिणेन तिष्ठन्मुञ्जपञ्चाङ्गीवद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभोमध्येऽश्वपूर्वाः" ४सू० । 'आहवनीयस्य दक्षिणतः तिष्ठद्भिर्मुञ्जमयीभिः पञ्चाङ्गीभिः पञ्चाङ्ग्यो मुखरिकाः ताभिर्बद्धास्तिष्ठन्ति प्राङ्मुखाः अश्वगर्दभाजाः पूर्वापरीत्या रासभोमध्येऽश्वपूर्वाः" क० । "उत्तरत आहवनीयस्यारत्निमात्र उभयतक्ष्णोक्ष्णा वैणवी शुषिराभ्रिः कल्माषाभावेऽकल्माषो प्रादेशमात्र्यरत्निमात्री वा" ५सू० । "आवन्त्यर्थात्पश्चनाशुत्तरतो मा भूदित्याहवनीयग्रहणम्"क० । "परिपाकवधात्कर्बुरा" संप०। "हिरण्मयीमेके" ६सू०। "एके आचार्या इच्छन्ति, अतश्च विकल्पः" क० । "अष्टगृहीतं जुहोति संततमुद्गृह्णन् युञ्जान इति (११,१) ७सू० । 'अष्टगृहीतमाज्यद्रव्यं संततं जुहोति" क० । 'देवस्य त्वेति (११,२) अभ्रिमादाय "हस्त आधायेत्येनामभिमन्त्रयते" । (११,११) ८सू० । "अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे-योगऽइति (११,१२,१४) ९सू० । "अभिमन्त्रयते" क० । "अनुपस्पृशन्नुत्क्रमयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति" (११,१५,१६ ) १० सू० । "अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति" ( ११,१६ ) । ( ६,३,३,१ ) शत०ब्रा० ११सू० । "दक्षिणतश्च पशवो युगपत्" १२सू० । "गच्छतां च दक्षिणतः पशवः, उत्तरतश्च पुरुषाः युगपद्गमनं कुर्वन्ति"क० । "अनद्धा पुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति" । (११,१६) १३सू० । "यो देवादीन्नावति स देवपितृमनुष्यार्थकः" क० । "वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति" (११,१७)१४सू०। "दृष्ट्वा निदधात्येनाम् । १५सू०। "वल्मीकवपाम्" क०। "आगत्येत्यभिमन्त्रयतेऽश्वम्" (११,१८) १६सू० । "आक्रम्येत्येनेन (११,१९ ) पिण्डमधिष्ठापयति" १७ सू० । "एनेनेत्यश्वोऽभिधीयते" क० "द्यौस्त इति (११,२०) पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन्नुत्क्रामेत्युत्क्रामयति ( ११,२१ ) १८सू० । "अश्वम्" क० । "उदक्रमीदित्यभिमन्त्रयते (११,२२) १९ क०।"अश्वमेव"क०।"आहवनीयवत् स्थापयति पिण्डस्य" २०सू० । "पशून्" क० "उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति (११,२३ ) 'व्यतिषक्ताभ्यामृग्भ्यामाहुती ( ११,२२,२३ ) स्रुवेणाश्वपदे" २१सू० । "मृत्संस्कारत्वादुपविश्येत्युच्यते, व्यतिषङ्गश्च एकस्याः पूर्वार्ध इतरार्धः इतरयोरप्येवमेव" क० । "अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति (११,२५,२७ ) बहिर्बहिरुत्तरयोत्तरयाभ्र्या पिण्डं खनति देवस्य त्वेति (११,२८) २२सू० । "अभिग्रहणमभ्यन्तरनिवृत्त्यर्थम् तथा चाह 'अत्र वा वैणव्यभ्रिरत्यसीदतीति "(६,५,-४,२ शत०ब्रा० उत्तरया परया ऋचा पूर्वलिखिताद्बहिर्बहिर्बाह्यप्रदेशे परिलिखति"। क० "कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णमपां पृष्ठमिति' (११,२९ ) २३सू० । "तस्मिन्कृष्णाजिने" क० । "विभाज्यं नहिव इति (११,२९ ) २४सू० । "पुष्करपर्णम्" क० "आलभत उभे शर्मा च स्थइति"(११,३०३१) २५सू०। "उभे कृष्णाजिनपुष्करपर्णे, शक्यत्वाच्च युगपदालम्भनम्" क० । "पिण्डं पुरीष्योऽसीति (११,, ३२) । "२६ सू० 'आलभते" क०। "पाणिभ्यां परिगृह्योत्येन दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वामग्नइति" (११,३२ ३८ ) । षड्भिः सर्वं सकृत्कृत्वा" २७सू० "ग्रहणे मन्त्रः "अथैनं परिगृह्णातीति" शत०ब्रा० (६,४,२,२ ) वचनात्"क० इति द्वितीया कण्डिका ।

"पुष्करपर्णे निदधाति"१सू०। "अपः श्वभ्रेऽपनयत्यपो देवीरिति (११,३८)२सू० । 'श्वभ्रः पिण्डावटः" क० । सं तइति ( ११,२९ ) वा तमपर्याचपति "३सू० । 'श्वभ्र एव" क० । "अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च" ४सू० । "संवापश्चावटे पुरीषस्य" क० । "आस्तीर्णयोरन्तानुद्गृह्णाति सुजात इति"( ११,४० ) ५सू०। "आस्तीर्णयोः कृष्णाजिनपलाशपर्णयोः" क० । "बन्धनायोभयोः प्रान्तान् सर्वत ऊर्ध्वान् करोति"संप०। 'त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासोअग्नइति । (११,४०) ६सू० । 'उद्गृहीतानन्तान्" क० । 'उत्तिष्ठति पिण्डमादायोद्तिष्ठेति" ( ११,४१ ) ७सू० । "ऊर्ध्वबाहुः

प्राञ्चं प्रस्तृणात्यूर्ध्वं ऊ षु ण इति" (११,४२) ८सू०। "प्रधारितबाहुः पिण्डम्" क०। "अत्रहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भव शिवो भवेति"। (११,४२,४५)" ९सू०।"अत्रहृत्य पिण्डं नाभेरुपरि धारयन्"क०।"धारयत्येषामुपरि पिण्डमनुस्पृशन् प्रैतु वाजी इषाग्निमित्यश्वखरयोः" (११,४६) १० सू०। "एषां पशूनामुपरि पिण्डमनुपस्पृशन् धारयति प्रैतु वाजीत्यश्वस्य, इषाग्निमिति खरस्य" क०। "अग्न आयाहीत्याकृत्य (११,४६) खराच्छागस्यैतं सत्यमित्यानिधानात्" (११,४७) ११ सू०। "धारयत्यनुपस्पृशन्नेव" क०। "आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये" १२सू०। "स्वस्थानस्थितानामेवावृत्तिः" क०। "अनड्वा पुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति"। (११,४७) १३ सू०। "अनन्यार्थत्वात् पूर्ववच्छब्देनाग्निषु प्रज्वलत्स्विलुच्यते (२, ११)" क०। "उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे निदधात्योषधय इति" (११,४७,४८)१४ सू०। "वि पाजसेति" (११,४९) प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति १५ सू०। "प्रमुच्य पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशं प्रति पशूनुत्सृजति" क०। "आपो हि ष्ठेति (११,५०) पर्णकषायपक्वमुदकमासिञ्चति पिण्डे" १६ सू०। "पर्णकषायं पलाशकषायम्" क०। पलाशत्वग्भिःक्वथितमुदकं पलाशकषायपक्वम्" संप०। "फेनं च तूष्णीं ततः कृत्वा" १७सू०। "तत एवोदकात् पूर्वतरं फेनं कृत्वोदकमासिञ्चति चशब्दात्फेनम्" क०। "अजलोमभिः संसृजति मित्रः संसृज्येति (११, ५३)" १८ सू०। "पिण्डम्"। "शर्करायोरसाश्मचूर्णैश्च रुद्राः संसृज्येति (११,५४)" १९सू०। "शर्करा प्रसिद्धा अयोरसो लोहसिङ्घाणः कीट इति यः प्रसिद्धः अश्मचूर्णः पाषाणचूर्णः चशब्दादेतैः पिण्डं संसृजति" क०। "शर्कराः सूक्ष्मकन्दुकाः अयोरसो लोहरसो यस्ताप्यमानाल्लोहात्पृथग्भवतीति कीट इति लोके प्रसिद्धः अश्मा दृढपाषाणः तेषां चूर्णैः संसृजति" संप०। "संसृष्टामिति" (११, ५५,५७) संयौति" २०सू०। "पिण्डं मिश्रयति आप्लावयतीत्यर्थः" क०। "अषाढां करोति महिषी प्रथमविन्ना तदाख्या" २१सू०। "अषाढाख्यामिष्टकां महिषी करोति। महिषीशब्दस्यान्यत्राप्रसिद्धत्वादाह प्रथमविन्ना तदाख्या"

"तद्धैव महिषीति"ब्रा० (६,५,२,१) क०। "भार्याणां मध्ये प्रथमं लब्धा प्रथमपरिणीता या स्त्री सा तदाख्या" संप०। "यजमानपादमात्रीं त्र्यालिखिताम्" २२सू०। "महिषीपादमात्री मा भूदिति यजमानग्रहणम्" क०। "त्रिषु स्थानेषु लिखिताम्" संप०। "यजमान उखां करोति मृदमादाय मखस्य शिर इति (११,५७) २३ सू०। "मृदादाने मन्त्रः" क०। "प्रादेशमात्रीं तिर्यगूर्ध्वां च" २४ सू०। "तिर्यगायामप्रमाणे विस्तारप्रमाणे च" क०। "पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपशौ" २५ सू०। "ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपशावपि" क०। "वसवस्त्वेति (११,५८) प्रथयति" २६ सू०। "आर्द्रं पिण्डम्" क०। "अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति" (११,५८) २७सू०। "धातुशब्दान्मृत्प्रक्षेप एव" क०। "प्रथितस्य तत्प्रान्तानुन्नीय ऊर्ध्वान् गमयति, धातुं प्रथमपिण्डिकाम्" संप०। "संक्लिष्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति" (११,५८) २८सू०। "संक्लिष्य शिथिलया मृदा संक्लिष्य वारिणा संश्लक्ष्णां सुकुमारां कृत्वा" संप०। "विश्वे त्वेति (११, ५८) समीकरोति" २९सू०। (६,५,२,३) शत० ब्रा०। "विस्तीर्यउत्तरे वर्तिं सर्वतः करोत्यदितिष्ट्वा रास्नेति (११,५९) ३०सू०। उखायाः ऊर्ध्वप्रमाणस्योत्तरे विस्तीर्णे उपरि वर्तमाने तृतीये भागे सर्वतः सर्वासु दिक्षु मृण्मयीं वर्तिं वृत्ताकारां रास्नां (काञ्चीगुणस्थानीयाम्) करोति" क०। "ऊर्ध्वास्तूष्णीं प्रतिदिशं" ३१सू०। "वर्तीः करोति चतस्रोऽपरा वर्तिं प्राप्ताः" ३२सू०। उखाशब्दस्याकृतिवचनत्वाद्द्वितीयोखा भवति" क०। "सर्वासु दिक्षु पार्श्वमध्ये बाह्यप्रदेशे अपराश्चतस्रो वृत्तीरूर्ध्वास्तूष्णीं करोति क्रियमाणाः मूलत आरभ्य वर्त्तिं प्राप्ताः तिरश्ची रास्नां यावदुच्चाः" संप० इति २कण्डिका

"स्तनानिवाभ्युन्नयति" १ सू०। "ऊर्ध्ववर्त्तीनामेकैकस्याः" क०। "आसां चतसृणां वृत्तीनामग्रेषु तिरश्च्या वृत्तेरुपरि स्तनानिव स्तनसदृशानुन्मृद्वयवानुन्नयति" संप०। "द्विस्तनामष्टस्तनामेके" २सू०। "तां हैके द्विस्तनामष्टस्तनामिति (६,५,२,१२) श्रुतेः द्विस्तनपक्ष एकस्मिन्नेव वर्त्यग्रे क्रियते अष्टस्तनपक्षे द्वौ द्वाविति क०।"बिलं गृह्णात्यदितिष्टइति"(११,५२) ३सू०। "मुखे गृह्णातीत्यर्थः" क०। "कृत्वायेति (११,५२) निदधाति उखाम्" ४सू०। "तिस्र एके" ५सू०। "उखाः

कुर्वन्ति" (६,५,२,१२) श०ब्रा०। "तथा च स्वयमातृण्ण-पक्षणाद्येकैका निधानान्ता क्रियते" क०। "इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः" ६सू०। "तुशब्दस्यार्थे चशब्दाद्यजमान एव तिस्र इष्टकाः विश्वज्योतिःसंज्ञकाः पृथग्लक्षणाः करोति लक्षणकरणं च प्रथमाद्वितीयाप्रज्ञानप्रत्ययमेवोपधानं यथा स्यादिति" क०। "मृदमुपशयां निदधाति" ७सू०। "उखां क्रियमाणामुपशेतदृत्युपशया तां मृदमतिरिच्यमानां निदधाति कार्यार्थम्" क०। "अवशिष्टां मृदमुपशयसंज्ञां निदधाति" संप०। "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति (११, ६०) प्रतिमन्त्रम् ८सू०। "शकृद्भिरश्वलेण्डैः" संप०। "अभ्र्या अभ्रं चतुरस्रं खनत्वदितिष्टेति (११,६१) ९सू०। "अभ्रिश्च पूर्वोक्तैव प्रकृतत्वात् अत स वैणव्यभ्रिरुत्सीदतीति (६,५,४,२) श०ब्रा०वचनात्" क०। "अपणमास्तीर्य यथाकृतमवदधाति" १०सू०। अभ्रे, येनैव क्रमेण कृता अषाढाद्याः उखायां तु विशेषः, "देवानां त्वेत्युखां (११,६१) न्युजाम्" ११सू०। "अवदधाति" क०। "अपणेनाच्छाद्य दक्षिणाग्निनादीपयति धिषणास्त्वेति (११,६१) १२सू०। "निर्मन्थ्येन वा धूपनश्रपणे" १३सू०। "कर्त्तव्ये" क०। "वरुत्रीष्टेतीक्षमाणो (११,६१) जपति" १४सू०। "उखाभीक्षमाणः" क०। "आचरति मित्रस्येति (११, ६२) १५सू०। "आचरणं च अपणप्रक्षेपः" क०। अषाढादीनामधस्तादुपरिष्टाच्च पुनः अपणं प्रक्षिपति" संप० "यावच्छ्राचरेत्" १६सू०। "यावद्भिः प्रकारैः अपणं प्रक्षिपेत्तावद्भिरनेनैव मन्त्रेणाचरेत्" संप०। "दिवैव प्रदहनोद्धरणे" १७सू०। "कर्तव्ये" (६,५,४,१०) श०ब्रा०। "प्रदहनं पचनम् उद्धरणं बहिर्निष्क्राशनम्" संप०। "उद्वपति अपणम्" १८सू०। "पदार्थतया" क०। "भस्मसाद्भूतं पराकरोति" संप०। देवस्त्वेत्युखाम्" १९सू० (११,२३)। "उद्वपति" क०। "उत्तानां करोत्यव्यथमानेति (११,६३) २०सू०। "उद्यच्छत्युखाम्" (११,६४) २१सू०। "ऊर्ध्वं यच्छति" क०। "परिगृह्य पात्रे करोति मित्रैतां तदिति" (११, ६४, २२सू०। "अजापयसावसिञ्चति वसवस्त्वेति" (११,६५) प्रतिमन्त्रम्" २३सू०। "उखाम्। त्रितयपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्त्तव्या" क०। "इष्टकाक्रियातस्त्र्यालिखितानाम्" २४ सू०। "अत ऊर्ध्वमिष्टकास्त्र्यालिखिताः क्रियन्ते" क०। "अपरिमितालिखिता वोत्तरयोः" २५ सू०। "द्वितीयाचतुर्थ्योः कुत एतत् ते हि प्रकृत्याम्नायते "रसो वै ते चिती अपरिमित उ वै रस इति" (८,७,२,१७), श०ब्रा०। "अतश्च विकल्पोऽयम्" क०। "पूर्ववदग्निः पाके" २६सू०। "इष्टकानां पाके भवति निर्मन्थ्यो दक्षिणाग्निर्वा" क० फाल्गुनामावास्यायां दीक्षासत्त्वा कृत्यशेषं तत्राह। "दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायशणकुलायावस्तीर्णाम् अन्तरेणाग्नं मत्तु भित्वा इति (११, ६८) तिष्ठन् दङ्प्राङ्" २१सू०। दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वा उखामाहवनीयेऽधिश्रयति, सा च मुञ्जकुलायावस्तीर्णा भवति अन्तरेणाणा। प्रागुदीचीं दिशमभिमुखः। अधिकारमुपजीवन्नाह" क०"रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रे षु च" २२सू० प्रागुदीचीं दिशमभिमुखो भवति" क० "अग्नावारूढे तयोदयासां प्रादेशमात्रीः समिधआदधाति" २३सू०। "उखायामग्नावारूढे तयोदय समिधआदधाति, प्रादेशमात्रीग्रहणं च शिष्टानुकरणप्रज्ञानार्थम्" क०। "अनारोहत्यङ्गारानोर्ध्येके" २४सू०। अनारोहत्यग्नावुखायाम् अङ्गारानोर्ध्येके समिदाधानं कुर्वन्ति" क०। ता इदानीमाह, "इतोन्नां कार्मुकीं इव इति" (११, ७०) २५सू०। "आदधाति, क्रमुको धनः तदीया कार्मुकी" क०। "वैकङ्कतीं परस्या इति(११,७१) २६सू०। "औदुम्बरीं परमस्या इति" (११,७२) २७सू०। "अपरशुवृक्णां यदग्न इति" (११,७३) २८सू०। "या परशुना न छिन्ना" क०। "अकुठारच्छिन्नाम्" संप०। "अधःशयां यदत्तीति" (११,७४) २९सू०। "भूमिसंलग्ना या सदा रूढा भवति" संप०। "पालाशीः प्रत्यृचमहरहरिति" (११,७५)। ४०सू०। "आदधाति अथैताःपालाश्यो भवन्तीति (६,६,३,७) श०ब्रा वचनात्, एवं चापरशुवृक्णा अधःशया चौदुम्बर्यावेव भवतः जात्यन्तराविधानात्" क०। "उपोत्तमां क्षत्रियस्येच्छन्" ४१सू०। "उत्तमायाः समीपे उपोत्तमा द्वादशी, तां क्षत्रियस्य यजमानस्येच्छयादधाति अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्तमोत्तमे इच्छयाधीयेते, एवं हि श्रूयते" श०ब्रा० (६,६,३,१२) क०। "एवं च सति, उत्तमां पुरोहितस्य" ४२सू०। "इच्छयादधाति" क०। "उत्तमाम् बाहुरिति" (११,८२) संप०। "अन्यस्योभे" ४३सू०। "अन्यक्षत्रियपुरोहितस्य च

एकादश भवन्ति त्रयोदश वा" क०। "क्षत्रियपुरोहितव्यतिरिक्तस्य द्वादशीलत्रयोदशाविच्छया भवतः" सं०प० "स्वाहाकारः सर्वास्वखायाम्" ४४सू०। "उखाया-माधीयमानासु समित्सु, अतोऽन्यत्रापि स्वाहाकारो भवति सर्वास्वित्यभिधानात्" क०। "उखायां सर्वासु समित्सु स्वाहाकारो भवति" सं०प०। "औदुम्बर्यादि दण्डान्तमनैके" ४५सू०। "एवं सति प्रागौदुम्बरहोमा-दुखाधिश्रयणादि'तान्यु हैकउखायामेवैतान्यौदुम्बराणि जुह्वतीति वचनात्" (६,६,१,२२) क०। "अत्रावसरे" सं०प० इति ४ कण्डिका।

"यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डल-मेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्ल-कृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिष्पिण्डं दर्शनो रुक्म इति"(१२,१)। "रुक्मं हि प्रतत्य सर्व-मेवैतज्जूयते (६,६,१,२), यजमानग्रहणाच्च स्वय-मेव यजमानः प्रतिमुञ्चते, द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः अत ऊर्ध्वं पिण्डाद्यन्वारम्भः एवं हि सर्वैः कृतं भवति" क०। "परिमण्डलं वर्तुलम्, एकविंशति-पिण्डम् पिण्डं निर्बाधम् निर्बाध्यन्ते उन्नताः निःका-श्यन्ते उन्नताः खलूपाङ्कहिनिःसृता भवन्ति, कृष्णाजिन शुक्लकृष्णेषु लोमसु निष्यूतं नितरां स्यूतम्, पुनः कीद-शम् त्रिगुणे तिष्ठति शणमये सूत्रे ओतं प्रोतम् तथा उप रिनाभि, पुनः बहिष्पिण्डं बहिर्निर्बाधम्" सं०प०। "दण्डशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो रूहिग्धाः"२सू० उखा याभ्यां व्रज्यते तौ दण्डौ, शिक्यं प्रतिद्धम्, आस-न्दी च। चतुरस्रा रज्जवो रूहिग्धा भवन्ति" क०। "रूहिग्धाः कर्दमलिप्ताः" सं०प०। "परिमण्डलाभ्या-मिण्ड्राभ्यामुखां परिगृह्णाति नक्तोषासेति" (१२, २) ३सू०। "हरति द्यावाक्षामेति" (१२,२) ४सू०। "तामेवोखाम्" क०। "आहवनीयस्य पुरस्तादुद्गाता-सन्दीवदासन्द्यां चतुरस्राङ्ग्रां शिक्यवत्यां निदधाति देवा अग्निमिति (१२,२) ५सू०। "उद्गात्रासन्दीवदिति प्रादेशपादी गम्यते" (१३,४,२) क०। सा च चतुरङ्गी सह पादैः, तस्यां शिक्यवत्यामासन्द्यां च निदधाति उखाम्" क०। "शिक्यपाशं प्रतिमुञ्चते षड्द्यामं विश्वा रूपाणीति" (१२,३) ६सू० "ग्रीवायाम्" क०। "सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति" (१२,४) पिण्डवत् ७सू०। "सह शिक्येन प्राञ्चमग्निं प्रगृह्णाति,

पिण्डवदित्यूर्ध्वं बाहुः (२,८)। "धारणं च" ८सू०। "पिण्डवदेव उपरिनाभि" क०। अत्र द्वाभ्यामङ्काभ्यां शुक्लयजुर्वेदस्याध्यायादि, त्रिभिरङ्कैः कात्यायनश्रौतसूत्रस्या-ध्ययकण्डिकादि। चतुर्भिरङ्कैः शतपथब्राह्मणस्याध्यायादि ज्ञेयं तेन तत्तत्प्रतीकमात्रस्टहीतमन्त्रसूत्रादि तत्तत्स्थाने द्रष्टव्यम् विस्तरस्तु शत० ब्रा० ६ अ० द्रष्टव्य। लौकि-कैरर्चितप्राचीरादौ इष्टकाघनफलेन इष्टकास्था-नेनोपायो दर्शितोलीला० यथा "चितौ करणसूत्रं वार्द्धवृत्तम्। उच्छ्रयेण गुणितं चितेः किल क्षेत्रसम्भव-फलं घनं भवेत्। इष्टकाघनहृते घने चितेरिष्टकापरि-मितिश्च लभ्यते ॥ इष्टलोच्छ्रयहृदुच्छ्रितिश्चितेः स्युःस्तराश्च दृषदां चितेरपि ॥ उदाहरणम्। अष्टादशाङ्गुलं दैर्घ्यं विस्तारो द्वादशाङ्गुलः। उच्छ्रितिस्त्र्यङ्गुला यासामिष्ट-कास्ताश्चितौ किल॥ यद्विस्तृतिः पञ्चकराष्टहस्तं दैर्घ्यं च यस्यां त्रिकरोच्छ्रितिश्च। तस्यां चितौ किं फलमिष्टकानां सङ्ख्या च का ब्रूहि कति स्तराश्च ॥ इष्टकायाः घनहस्त-मानम् ३/३६ चितेः क्षेत्रफलम् ४० उच्छ्रयेण ३गुणितं चितेर्घनफलम् १२०। यथोक्तकरणे लब्धा इष्टका सङ्ख्या २५६०। स्तरसङ्ख्या २४। एवं पाषाणचयेऽपि" 'व्यासात् षोडशभागः सर्वेषां सद्मनां भवति भित्तिः। पक्वेष्टकाकृतानां दारुकृतानां च स विकल्पः। इह०स०। "नेष्टकारचिते पितृन् संतर्पयेत्" शङ्खलि०। "स्वत्सयात् कोटिगुणितं फलं स्याद्दारुभिः कृतात्। कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये" मठ०त० पु०। वास्तु-यागे 'आकाशपदे' इष्टकारोपाचारः वास्तु याग-शब्दे दृश्यः।

**इष्टकाचयन** न० इष्टकयाऽग्नेश्चयनम्। इष्टकया अग्नेश्च-यने तत्प्रकारः कात्या०श्रौ०सू०।"एतया विकल्पाभिमन्त्र्यं-केऽन्यचितं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदु-भयतःप्रउगः समुह्य पुरीषः" १६,५,८। "एते अग्नि-विशेषाः तदाकारांश्चिन्वन्त्येके एके सुपर्णचितम् त्रिलि-ङ्गत्वादस्या विकृतेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एवं हि श्रूयते "तं हैकएतया विकल्पाभिमन्त्र्यान्यां चितिं चिन्वन्तीति" (६,७,२,८ शत०ब्रा०) क०। "विकल्पा एतया ऋचा अन्यचितं षड्विधमन्यमग्निं चिन्वन्ति त-मेवाह द्रोणचिदित्यादि" सं०प०। "समुह्य पुरीषे प्रविदिशं पुरीषाहरणम्" १० सू०। प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम्" क०। "विष्णुक्रमान् क्रमते विष्णो-

रिति" (१२,५ यजु०) "प्रतिमन्त्रमभ्यु द्रपभयं च तस्मि-स्तस्मिन्" ११ सू० । "तस्मिन् क्रमणे" क० । "अक्रम-स्तुर्थे"१२सू०। "उद्रपहरणं तु भवत्येव" क० । दिशो वीक्षते दिशोऽनुविक्रमस्वेति (१२,५) १३सू० "प्रतिदिशं मन्त्रः" क० । "पिण्डवत्प्रागुदञ्च प्रस्कन्दयात्यक्रन्ददग्नि-रिति" (१२,६) १४ सू० । पिण्डवदित्यूर्ध्व बाहुः (३,८) क० । "अवरोहत्वग्नेऽभ्यावर्तिन्निति" (१२,७) १५सू० "प्रत्यवरोहत्यग्निम् यावत्कृत्व ऊर्ध्वोऽवरोहतीति" (६,७,३,६) "श्रुतेस्तद्वत्प्रत्यवरोहणम्" कर्कः । "उपरि-नाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते"(१२,११) १६सू०। "अग्निम्"क०। "पाशा उन्मुच्योदुत्तममिति"(१२,१२) "पिण्डवत्प्राग्दक्षिणा प्रस्कन्दयात्यग्ने बृहन्निति"(१२,१३) १७सू० । "अवहरति हंसः शुचिषदिति" (१२,१४) । १८ सू० । "आसन्द्यां करोति बृहदिति" (१२,१४) १९सू०। "उपतिष्ठते सीद त्वमिति" (१२,१५) २०सू० । "वात्सप्रेण च दिवस्परीत्येकादशभिः" (१२,१८,२८) २१सू०। "उपतिष्ठते"क०। "अनुवाकेनैके" (१२,१८,२९) २२सू०। "उपतिष्ठन्ते" क०। "अत्र दीक्षितोऽयमिति" २३सू०। "अस्मिन्नवसरे दीक्षितोऽयमित्याह (७,४,११) "दक्षान्ते तु स्थाधिश्रयणाद्यु क्तम् अतः प्राकृतानुवृत्त्यर्थ-मिदमुच्यते" क० । "आवृत्तिरतः संवत्सरम्" २४सू०। "अत ऊर्ध्वं यदुच्यते तत् संवत्सरं यावदावर्तते" क० । "अत ऊर्ध्वं यत्कर्मोच्यते भस्मोद्वपनादि तस्य संवत्सरं यावदावृत्तिर्भवति" संप० । ५कण्डिका

"उखाया भस्मोद्वपनमस्तमिते पात्रे" १सू० । "तत्र प्रभ्याग्निवर्गात्" "भस्मोदुप्य वाचं विसृजत" इति श्रुतेः (६,७,४,१४) क०। "भस्मोद्वपनं भस्मोद्धरणम्" संप० । "वाचं विसृज्य समिदाधानं रात्रौं रात्रीमप्रयावमिति" (११,७५) २सू० । "एवमुदिते भस्मोद्वपनादि" ३सू० । "कर्तव्यम् अयं तु विशेषः"क०। "अहरहरित्याधानम्" (११,२५) ४सू० । "विष्णुक्रमवात्सप्रे चाहव्यत्यामुदिते समिधमाधाय" ५सू० । "अहव्यत्यासेन कर्तव्ये"क० "अस्मिन्दिने विष्णुक्रमाः उत्तरस्मिन्वात्सप्रम् एवं याव-द्दीक्षं कर्तव्यम्" संप० । "रुक्मप्रतिमोचनादि प्राग्वात्स-प्राद्विष्णुक्रमाः" ६सू०। "तयोर्विभागमाह । साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः संवत्सरमित्युपक्रम्य चिन्वीतेति (१०,२,६,९) पवित्रे चतस्रो दीक्षा आम्नाताः पवित्रचतुर्दीक्ष इति (१५,१,३) तत्राग्नौ सति चिन्त्य-ते किमग्निनिमित्ता दीक्षा भवन्तु उत सौमिक्य इति उभयं चैतच्चरितार्थम् पवित्राद्बहिराग्निक्यश्चरितार्थाः अनग्निके च पवित्रे सौमिक्य इति तेन साग्निमति प-वित्रे कथं भवत्विति नियमकारणाभावादनियमे प्राप्त आह" क० "सोमाविरोधेन वा तत्प्रधान्यात्" ७सू० । "सोमस्य प्रधानभूतत्वात् तदीया एव दीक्षा भवन्ति" क० "सोमयागेनाविरोधः सोमाविरोधः तेनाविरोधेनैव दीक्षा भवति वावधारणे कुतः तत्प्रधान्यात् सोमस्य प्राधान्यात् अग्नेश्च तदङ्गत्वात् तेन द्वादशाहे वाजपेये द्वादश त्रय-दश वा भवन्ति नाग्निप्रयुक्तसंवत्सरदीक्षाः" संप० । "न्यञ्च समिधं व्रते प्रत्ते-प्रत्तेऽन्नपतइत्याधानम् । (११,८३) ८सू० "उख्येऽग्नौ यजमानः करोति" संप० । "संव-त्सरभृतिनोऽसंवत्सरभृतेऽपि" ९सू० । पूर्वं कश्चि-च्चिद्यज्ञे साग्निके येनैकवारं संवत्सरमुख्योऽग्निर्भृतो भवति स संवत्सरभृतो तस्यासंभृतेऽप्युख्येऽग्नौ चयनं भवति (९,५,१,६५) संप० "संवत्सरं सोष्यतः" १० सू०। "संवत्सरमभिषवं करिष्यतः असंवत्सरभृतेऽपि चयनं भवति (९,५,१ ६६) क० । "संवत्सराहिताग्नेः" ११सू०। "असंवत्सरभृतेऽपि चयनमिष्यते" (९,६,१,६७) क० । "जातस्य च" १२सू० । "संवत्सरे जातस्य च असंवत्-सरभृतेऽपि चयनं भवति" (९,५,१,६८) क० । "गर्भाधानदिनादारभ्य संवत्सरे पूर्णेऽतीते वा यो जात-स्तस्य भवति" संप० । "वाय्वाश्यमन्त्यम्" १३सू० । "अन्त्यं जघन्यमिदं पक्षान्तरम् षण्मासानुख्यभरणं कृत्वा-ग्निश्चीयत इति (९,५,१,६२)क०। "षाण्मास्यं षण्मासा-नुख्यमग्निं भृत्वा चयनं भवति" संप० । "अचयनं वा परस्मै" १४सू० । चयनं वेति विकल्पः एवं हि श्रूयते (९, ५,२,१२) त्रयो ह वै" इत्युपक्रम्य परस्मै करोतीति निन्दार्थवादः प्रतिषेधार्थः तस्मादप्येवंविद् कामं परस्मा अग्निं चिनुयादिति ९.५.२,३, प्रतिप्रसवः अतः प्रतिषेधप्रतिप्रसवाभ्यां विकल्पः" संप० । "प्रामनः कृत्वो-ख्यस्योत्तरतः समिदाधानं समिधाग्निमिति (१२,६०)१५ सू०। "उख्यपुरतः प्राङ्मुखमनः कृत्वोख्यएव समिदाधा-नम्"क० । "आसन्दीमुद्यम्योदुत्वेति (१२,६१) दक्षिण-तोऽनसि करोति" १६सू० । "आसन्दीमुख्यमुदु त्वेत्युत्-क्षिप्यानसो दक्षिणतोऽवस्थितोऽनसि करोति" कर्कः । "स्थाल्यां गार्हपत्यं पश्चात्" १७सू० । "अनसि करोति दक्षिणाग्निं च वितृतीये करोति"क०। "अनड्वाहौ युक्त्वा

प्रेदग्न इति (१९,२९ ) प्राङ् यात्वा यथार्थम्" १८सू०। "गच्छेत्" क० । "आरोहेत् पार्श्वतो गच्छेत्"१९सू० । 'यजमानः संस्कारात्"क० । "अच्छे स्वर्जत्यक्रन्ददग्निरिति (११,२२( जपति" २०सू० । "स्वर्जनं च शब्दकरणम्" क० । 'वासेऽवहरत्युद्धतावोक्षितउत्तरतः समिदाधानं प्र-प्रायमिति (१२,२४) २१सू० । "यत्र वासस्तत्रैवावहरणम् न प्रागवसतेः एवं ह्याह (६,८,१,१२) स यदि पुरावसथे विमुञ्चेतानस्यैवाग्निः स्यादिति" वसत्यां तु उत्तरतोऽग्नेनवतार्य समिदाधानं "प्र-प्रायमिति" । उद्धतावोक्षितग्रहणं च परिसमूहनाद्युपसंग्रहार्थमपि स्मार्तं ह्येतदनूद्यते (६,४,४,१८) उद्धते वाऽ अवोक्षितेऽग्निमादधातीति" एवं च सति तदपचारे स्मार्तं प्रायश्चित्तम्"क० । "वासार्थे रथे उत्तरस्यां दिशि अग्निमवतारयति" संप० । "वनीवाहनमेतद्दीक्षासु यदेच्छेत्" २२सू० । "वनीवाहनमिति" संज्ञास्य कर्मणः सा च संव्यवहारार्था "ऊर्ध्वं वनीवाहनादिति" ( २५सू० ) तच्च दीक्षासु कर्तव्यम् । यदेच्छोपजायते महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात्" क० "अप्सूख्यभस्मावपनं क्रयणीयादौ" २३सू० । उख्यभस्मावपनमप्सु कर्तव्यम् आदौ क्रयणीयस्याह्नः"क०। "अन्यत्र चेच्छन्" २४सू०। "करोति"क०। 'ऊर्ध्वं वनीवाहनात् क्रमयोगात्" २५सू० । अन्यत्रेच्छया कुर्वन् वनीवाहनादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात्" क० । "वनीवाहनादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षा भस्मावपनम् । कुतः क्रमयोगात् पूर्वं वनीवाहनमन्त्राः पश्चाद्भस्मापोऽभ्यवहरणस्य" संप० 'पलाशपुटेनापो देवीरित्येकया ( १२,३५ ) २६सू० । "पलाशपुटेन भस्म गृहीत्वाप्स्वावपति"क० । "ततो द्वाभ्याम्" (१२,३६-३७) २७ सू० । "पुनश्चावपति द्वाभ्यामृग्भ्याम्"क० । "आद्याभ्यां (१२,३५-३६) वा पूर्वम्" २८सू०। "पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकयर्चा" वाशब्दो विकल्पार्थः तुल्यश्रुतित्वात्" क०। "अनामिकया भस्मादादत्ते प्रसद्येति (१२,३८-४१) २९सू० । "प्रास्ताङ्गुष्ठः किंचिदनामिकयादत्ते" (६,८,२,७) । 'प्रास्तोस्थामुपतिष्ठते बोधा स इति" (१२,४२) ३०सू० । "यत्तदात्तं भस्म तत्पात्र" क० । "प्रायश्चित्तिं समिधोपहृत्य" ३१सू० । ६कण्डिका ।

'आज्य' विश्वकर्मन्हविषा ( १२,४३ ) जुहोति" १सू० । "प्रायश्चित्तिरित्यस्य होमस्य संज्ञा उपपूर्वस्य हरतिर्ग्रहणार्थो दृष्टोऽन्यत्रापि "अथ स्रुचोपहृत्याज्यमिति (२,४, १,२५ )" क० । "समिधा करणभूतया स्रुक्स्थानीयया उपहृत्य गृहीत्वा" संप० । "उत्थाय दधाति समिधं पुनस्त्वेति ( १२,४४ ) २ सू० । उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति । नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह" क० "गार्हपत्येऽनुगते निर्मथ्य" ३ सू० । "आदधाति मन्थनं प्राप्तत्वादनाच्यम् उच्यते प्रायश्चित्तार्थम्" । "प्राजहिते उपशान्ते मथित्वा प्रायश्चित्ती करोति" संप० । "सुत्यावाहवनीये सांकाशिनेन हृत्वाः" ४सू०। "सुत्यासु वर्तमानासु आहवनीयेऽनुगते सांकाशिनेन हृत्वा तमादधाति" सांकाशिनशब्दः प्रगुणमेव हृत्वेत्यर्थकः एतच्चोच्यते पूर्ववत्प्रणयनं मा भूदिति" क०। "आहवनीयेऽतिप्रणीतेऽनुगते सांकाशिनेन हृत्वा ऋजुना सदोहविर्धानमध्यमार्गेणैव हृत्वा" संप० । "आग्नीध्रीयमुत्तरेण सदः" ५सू० । "हृत्वा निदधाति उत्तरेण सदो हृत्वेतीध्मव्युदासार्थः" क० । आग्नीध्रीयमग्निमनुगतं सदस उत्तरेणैव हृत्वा" संप०। "प्रष्टङ्ग्रादाहतोक्षेत्र" ६सू०। "उख्ये चानुगते पूर्ववत्प्रष्टङ्ग्रात् अयं तु विशेषः आहता आहृत्यग्रहणं च मन्त्रनिवृत्त्यर्थम् । "एतयैवाहृतानुपहरन् यजुरिति ( ६,६,४,९) श्रुतेः" क० । "उख्येऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहृत्य (११,१७ समितमित्युपस्थाय (१२,५७ आहृता मन्त्ररहितक्रियामात्रेण पूर्ववदुखां प्रष्टङ्ग्रात् उखामाहवनीयेऽधिश्रित्योख्यमग्निमुत्पादयेत्" संप० । "अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां-पूर्वाम्"७सू० । "अध्वरप्रायश्चित्तिं च करोति सर्वेषु निमित्तेषु तां च पूर्वाम् पूर्वां चशब्दादाग्निकीं च । सर्वग्रहणं च भस्मापोऽभ्यवहरणार्थम् । (२३) तत्रापि हि विधीयेते (६,८,२,११) उभे प्रायश्चित्ती "करोतिये एवाग्नावनुमते इति" यथाकालमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते आग्निकी तु विश्वकर्मणइत्येव" क० "सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यथाकालं परमेष्ठ्यादिकालाहुतिं (२६,६,१ ) पूर्वां पूर्वां जुहुयात् पश्चादग्निप्रायश्चित्तिम् चकारात्" संप० "उखाभेदने नवस्याल्यां महासुख्याकुखाकपालमवधायावपति" ८सू० । यद्येषोखाभिद्येतेति" (६,६,४,८) प्रकृत्य सर्वमिदमाम्नातम् एतच्चेकोखापक्षे भवति । त्रित्वपक्षे तु द्वयोरेवैकस्यामावपनम्"(६,५,२,२२)क०।"उखोपशये पिष्टा मृदा स-

तत्र गुणविधानमनर्थकम्'। न इति ब्रूमः, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति,यदि नामधेयं स्यात्, यावदेव यजेत इति, तावदेव उद्भिदा यजेत इति, न प्रकृतौ कश्चित् गुणविशेषः स्यात्। गुणविधौ च गुणसंयोगात् कर्म्माधिककर्मर्थं विदधत उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति तस्मात् गुणविधय इत्येवं प्राप्तम्" भा० "अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्व्वमविधायकत्वात्" १,४,२,सू०"अपि वा इति पक्षो विपरिवर्त्त्यते। नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं, श्रुतिरेवं यागमभिधास्यति, इतरथा श्रुतिरुद्भिदादीन् वदन्तो उद्भिदादिमतो लक्षयेत्! उद्भिद्वता यागेन कुर्य्यादिति। यागेन कुर्य्यात् इति यजेतेत्यस्यार्थः करणं हि यागः। उद्भिदाद्यपि तृतीयानिर्द्देशात् करणं, तत्र उद्भिदा यागेन इति कर्म्मनामधेयत्वेन सामानाधिकरण्यमाञ्जस्यं, द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्ज्ज्यायसी। तस्मात् कर्म्मनामधेयम्। 'ननु प्रसिद्धं द्रव्यवचनत्वमपक्रमेत, अप्रसिद्धं कर्म्मवचनत्वं प्रतिपद्येत' उच्यते, तृतीयानिर्द्देशात् कर्म्मवचनता। कुतः? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः, तेन यागवचनमिममनुमास्यामहे।

"नैतद्युक्तं,यदि तृतीयानिर्द्देश इति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्यते, स्यादेतदेवं, न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम्। तृतीयावचनम् अन्यथा नोपपद्यते" इति चेत्। कामं नोपपादि, न जात्वचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः। लक्षणेति चेत्, वरं लक्षणा कल्पिता, न यागाभिधानं, लौकिकी हि लक्षणा, हठोऽप्रसिद्धकल्पनेति। अपि च यदि नामधेयं विधीयते, न यागः,अथ यागः, न नामधेयम्, उभयविधाने वाक्यभेदः" इति। उच्यते, न नामधेयं विधायिष्यते, अनुवादा हि उद्भिदादयः। कुतः प्राप्तिः? इति चेत्। ततोऽभिधीयते, उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः, उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भित् यागः, एवमभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्व्वत्र। अतः कर्म्मनामधेयम्। यत्त्वप्रवृत्तिविशेषकरोऽनर्थकः इति, नामधेयेऽपि गुणफलोपबन्धो नार्थवत्, तस्मात् कर्म्मनामधेयान्येवंजातीयकानि—इति सिद्धम्" भा० गवामयने यत्र सप्तममासिकौत्तमाभिप्लविकस्थाने २एकादशे दिने। "सप्तमस्य मासस्योत्तमयोरभिप्लवयोः स्थाने विश्वद्व्यूढोदशरात्र उद्भिद्वलभिदौ" आश्व०श्रौ० १२, १,५,"सप्तमस्य मासस्य ये तयोरभिप्लवाः तेषां यौ उत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूढोदशरात्रः उद्भिद्वलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि" नारा०वृ०। गवामयनशब्दे विवृतिः।

उद्भिद् पु० उद्+भिद्–क्विप्। १वृक्षादौ पञ्चविधे स्थावरे। २उद्भेदके त्रि० "होता यक्षत्तनूनपातमुद्भिदम्" यजु० २८,२५ "उद्भिदं वस्त्रफलानामुद्भेत्तारम्" वेददी०।

उद्भिन्न त्रि० उद्+भिद्–क्त। १उत्पन्ने कर्म्मणि क्त। २द्विधाकृते दर्शिते च। "यौवनोद्भिन्नशोभया"।

उद्भूत त्रि० उद्+भू–क्त। १उत्पन्ने "शिवशिक्षितयोद्भूतः कोटिसूर्य्यसमप्रभः" ति०त० पु० "वसन्तमदनोद्भूतः" कलसमन्त्रः आवहते २प्रत्यक्षयोग्ये "उद्भूतरूपं नयनस्य गोचरः" उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः" भाषा०। उद्भूतत्वञ्च उद्भवापरपर्य्यायो रूपादिविशेषगुणगतोजातिभेदः कणा० सूत्रवृत्तौ उक्तः यथा "अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः" क०सू०। "तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्" सू०।"रूपगतोविशेषोरूपविशेषः तच्चोद्भूतत्वमनभिभूतत्वं रूपत्वञ्च तस्माद्रूपस्योपलब्धिः। नन्वेवं परमाणोर्द्व्यणुकस्य च रूपं स्यादुपलभ्येतेत्यत उक्तमनेकद्रव्यसमवायादिति अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समवायात्, घटादयोऽप्यवयवद्वयारब्धाः परम्परयाऽनेकद्रव्याश्रया एव, रसस्पर्शादौ रूपत्वविरहात् चाक्षुषत्वाभावः चाक्षुषे तेजसि च उद्भूतत्वविरहात्। उद्भवः रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः। नन्वेवं शुक्लत्वमधुरत्वसुरभित्वकटुत्वादिभिरपि परस्परभावानुपपत्तिरेव तत्तद्व्याप्यतन्नानात्वकल्पने तु कल्पनागौरवम् उद्भवपदस्य नानार्थत्वञ्चेति चेन्न बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात्। अनुद्भवाभाव एव उद्भव इति केचित्। तच्चिन्त्यम् अनुद्भवस्याप्येवं व्यवस्थापयितुमशक्यत्वात्। अतीन्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत् एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वाप्रत्तेः। ऐन्द्रियकत्वावच्छेदकं किमिति चेत् तत्त्वम्, विशेषगुणेष्वेकैवोद्भूतत्वं जातिः गुणगतजातौ परस्पर-

भावानुपपत्तिर्न्न दोषायेत्यपि वदन्ति। तेनेति रूपप्रत्यक्षाभावेनेत्यर्थः यथा रूपविशेषात् रूपत्वानभिभूतत्वोद्भूतत्वलक्षणात्, रूपोपलब्धिस्तथा रसविशेषात् रसत्वानभिभूतत्वोद्भूतत्वलक्षणात् रसोपलब्धिः एवमितरत्रापि योज्यम्। अनेकद्रव्यसमवायस्यातिदेशः। माधवमतविगिन्द्रियाणामनुद्भूतत्वाद्गन्धरसस्पर्शानामप्रत्यक्षम् पाषाणादावनुद्भूतत्वाद् गन्धरसयोः। तद्भस्मनि तयोरुपलम्भात् तयोः पाषाणादावनुपलम्भ एव न तु स्पष्ट इत्येके। विभक्तावयवाभ्रद्रव्यरूपानुद्भवात्तदप्रत्यक्षम् एवं रसस्यापि। उष्णजले तेजोरूपस्यानुद्भवात् स्पर्शस्य चाभिभवात् विततकर्पूरकज्जलादौ रूपरसस्पर्शानामनुद्भवादनुपलम्भः। कनकादौ रूपमुद्भूतमेव शुक्लत्वभास्वरत्वे परमभिभूते। रूपमप्यभिभूतमित्येके कनकप्रत्यक्षन्तु रूपान्तरसाहचर्य्यात्। अभिभवश्च बलवत्सजातीयप्रत्यक्षकृतमप्रत्यक्षं न तु बलवत्सजातीयसम्बन्धमात्रम्, बलवत्सजातीयसम्बन्धस्याप्रत्यक्षानिरूप्यतया अप्रत्यक्षस्यैवोपजीव्यत्वात् नचाप्रत्यक्षप्रयोजकत्वेन बलवत्सजातीय एवोपजीव्यः, अप्रत्यक्षस्य प्रत्यक्षप्रागभावस्य तदत्यन्ताभावस्य वा तदप्रयोज्यत्वात् प्रत्यक्षध्वंसस्य च तत्राभावात्। तथापि तर्हि बलवत्सजातीयप्रत्यक्षकृतमप्रत्यक्षमनुपपन्नमेवेति चेत् अस्त्वेवं तथापि सजातीयस्य बलवत्त्वे दुर्बलत्वे वा तादृशसम्बन्धसत्त्वे वा प्रत्यक्षाप्रत्यक्षे एव प्रयोजके एवेति स एवाभिभवपदार्थः"।

उद्भूति स्त्री० उद्+भू—क्तिन्। १उत्पत्तौ। उत्कृष्टा भूतिः। २उत्तमविभूतौ ३श्रीवृद्धौ च। "उमा वधूर्भवान् दाता याचितार इमे वयम्। वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः" कुमा०।

उद्भेद पु० उद्+भिद—घञ्। १रोमाञ्चे। भावे घञ्। २उद्भिद्योत्पत्तौ ३प्रकाशे च। "उमास्तनोद्भेदमनु प्रवृद्धः" कुमा०। "तं यौवनोद्भेदविशेषकान्तम्" रघुः। "पुष्पोद्भेदं सह किसलयैर्भूषणानां विशेषात्" मेघ०। "कन्दोद्भेदा वैद्रुमा वारिणीव" माघः। "हसितन्तु तथाहासो यौवनोद्भेदसम्भवः" "षट्कोहि मन्मथोद्भेदस्तदागमनहेतुकः" सा०द०। ३मेलने च "गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः" भा०व०८४अ०। ल्युट्। उद्भेदनमप्यत्र न०। "चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत" भा० व०८८अ०। "उद्भेदनं प्रकाशनम्" उद्भिच्छब्दे शबरभा०।

उद्भ्रम पु० उद्+भ्रम—करणे घञ् न वृद्धिः। १उद्वेगे भावे घञ्। २समन्तात् भ्रमणे। भावे ल्युट्। उद्भ्रमणमप्यत्र न०

उद्भ्रान्त न० उद्+भ्रम—भावे क्त। १उद्भ्रमणे अम० स्वार्थे कन्। घूर्णितगतौ शब्द०। अन्तर्भूतण्यर्थे भावे क्त। २बाहुमुद्यम्य खड्गभ्रामणे। उद्+भ्रम कर्त्तरि क्त। ३भ्रान्तियुक्ते ४ऊर्द्ध्वभ्रमणकर्त्तरि च त्रि०। "मारीचोद्भ्रान्तहारीताः, रघु०

उद्य त्रि०वद—क्यप्। कथनीये "अन्ततोद्यं न तत्रास्ति" भट्टिः सुप्युपपद एवास्य साधुत्वम् न पृथक्प्रयोग इति।

उद्यत् त्रि० उद्+या—शतृ। उद्गच्छति "उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः" का०प्र० "उद्यन् समुद्रादुत वा पुरीषात्" यजु०२९,१२। "नेक्षेतोद्यन्तमादित्यम्" मनुः। स्त्रियां ङीप्। सा च २विष्टुतिभेदे च सा च ताण्ड्य०ब्रा० दर्शिता

"तिसृभ्योहिङ्करोति स प्रथमया, तिसृभ्योहिङ्करोति स मध्यमया, तिसृभ्योहिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः"। "एकैकस्य साम्नः पञ्च विभक्तयः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः, तत्र हिङ्कारस्त्रिभिरुद्गातृभिः सर्व्वत्र कर्त्तव्यः अतएव सूत्रकृतोच्यते "साम्ने साम्ने हिङ्कुर्युरिति" तिसृभ्य इति "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" पा० कर्म्मणि चतुर्थी तिस्रऋचो गातुं हिङ्कुर्यात् एकवचनमतन्त्रम् उक्तादेव हेतोः" अतस्त्रयोऽप्युद्गातारो हिङ्कुर्युरित्यर्थः। एवमुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना। स हिङ्करोति स हिंकर्त्ता प्रथमया त्रिरक्तया गायेत् अयं प्रथमः पर्य्यायः। त्रिसृभ्यो हिङ्करोति स हिङ्कर्त्ता मध्यमया त्रिरक्तया गायेत् अयं द्वितीयः पर्यायः, पुनरपि तिसृभ्यो हिङ्करोति स हिङ्कर्त्ता तृचस्योत्तमयान्त्या तया त्रिरक्तया गायेत् एषः तृतीयः पर्य्यायः। अनेन पर्य्यायेण त्रिवृत्स्तोमः सम्पद्यते उक्तप्रकारेण त्रिधा वर्त्तत इति त्रिवृत् स्तोमः तस्य विष्टुतिरेषा उद्यती ऊर्द्धं गच्छन्ती उक्तेषु पर्यायेषु प्रथममध्यमोत्तमक्रमेण ऊर्द्ध्वगमनादन्वर्थसंज्ञेयमेषा त्रिवृतः प्रथमा विष्टुतिः" भा० सामसं०भाष्ये माधवेनउद्यतीनामकविष्टुतेः प्रकारः स्पष्टं दर्शितो यथा "पठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्त्तव्यम् तत्र प्रथमपर्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये चोत्तमाः। तिसृभ्य इति तृतीयार्थे पञ्चमी, हिङ्करोति गायतीत्यर्थः। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः (स्तुति-प्रकार-विशेषः), अस्याः विष्टुतेरुद्यती नामेति, भा० पञ्चदशस्तोमेऽपरा उद्यती विष्टुतिः ता०ब्रा०दर्शिता यथा

"तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिरुद्यती पञ्चदशस्य विष्टुतिः" ब्रा० "त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेत्युद्यती पञ्चदशस्य विष्टुतिरिति। त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेतोत्युद्यतीत्युच्यते" भा०।

सप्तदशस्तोमस्यापराप्युद्यती तत्रैव दर्शिता "अथोद्यत्याख्यां सप्तदशस्तोमस्यापरां विष्टुतिमाह" भा०। "तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, नवभ्योहिङ्करोति स तिसृभिस्सतिसृभिस्स तिसृभिरुद्यती सप्तदशस्य विष्टुतिः" ब्रा०। "तिसृभ्यः पञ्चभ्यो नवभ्य इति क्रमेण संख्याया ऊर्द्धगमनादुद्यती ऊर्द्धं गच्छन्ती एतत्संज्ञा एषा सप्तदशस्तोमस्य विष्टुतिः" भा०।

अयं संक्षेपः गवामयने त्रिवृदादयः स्तोमाः विहिताः तेषां त्रिवृदादिस्तोमानां तिस्रोविष्टुतयः (सन्निवेशविशेषरूपेण स्तवनानि) तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः उद्यती कुलायिनी परिवर्त्तिनी चेति तत्राद्या दर्शिता अन्ये तत्तच्छब्दे वक्ष्येते।

**उद्यत** त्रि० उद्+यम—कर्त्तरि—क्त। १उद्यमयुक्ते कृतोद्यमे "आततायी वधोद्यतः" अमरः। भावे क्त। २उद्यमे न०। यमेर्नियमनार्थत्वे कर्म्मणि क्त। ३उत्तोलिते ४उद्यमिते "प्रहृक्सेज उद्यत आश्विनः" यजु० २९,५। "उद्यम्यते इत्युद्यतः" वेददी०। "पर्य्यायोद्यतकार्म्मुकौ" रघुः।

**उद्यति** स्त्री उद्+यम—भावे क्तिन्। उद्यमे। "वैश्वदेवानि जुहोत्यश्वमेधस्योद्यत्यै" शत० ब्रा० १२,१,८,१।

**उद्यम** पु० उद्+यम—घञ् न वृद्धिः। १प्रयासे प्रयत्नभेदे २उद्योगे। "निशम्य चैनां तपसे कृतोद्यमाम्" "शशाक मेना न नियन्तुमुद्यमात्" कुमा०। ३उत्तोलने च "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" या० स्मृ०।

**उद्यमन** न० उद्+यम—णिच्—ल्युट्। १उत्क्षेपणे २उत्तोलने।

**उद्यमित** त्रि० उद्+यम—णिच्—क्त। १उत्तोलिते २उद्यमाय प्रेरिते। "आत्मनोमधुमदोद्यमितानाम्" किरा०।

**उद्यान** पुंन० उद्यायतेऽत्र उद्+या—आधारे ल्युट् अर्द्धर्चादि। आरामे। तत्करणप्रकारादि आरामशब्दे ८० १पृ० उक्तम्। "बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या" "उद्यानानां नवजलकणैर्यूथिकाजालकानि" मेघ०

**उद्यानपाल** त्रि० उद्यानं पालयति पाल—अण् उप० स०। (माली) उद्यानरक्षके "उद्यानपालसामान्यमृतवस्तमुपासते" कुमा०। ण्वुल्। उद्यानपालकोऽप्यत्र। स्त्रियां टाप् अतइत्त्वम्। "ततः प्रविशति उद्यानपालिका" मालविकाग्निमित्रनाटकम्।

**उद्यापन** पुंन० उद्+या—णिच्—ल्युट् अर्द्धर्चादि। व्रतादिसमापने व्रतप्रतिष्ठायाम्। हेमाद्रौ व्रतखण्डे "उद्यापनं प्रवक्ष्यामि" इत्यसकृत् व्रतभेदे प्रयोगः। "प्रतिष्ठा च कर्म्मान्तरं न तदङ्गमिति" रघु०। अस्येतिकर्त्तव्यतासामान्यप्रकारः व्रततत्त्वादौ अनुसन्धेयः। विशेषतस्तु तत्तद्व्रतोक्तविधायवाक्येभ्योऽवसेयः विस्तरस्तु हेमाद्रौ व्रतखण्डे दृश्यः। तत्र तिथि० त० व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालमाह ज्योतिषे "गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहके गुरौ। वक्रिजीवाष्टविंशेऽह्नि गुर्वादित्ये दशाहिके। पूर्वराशावनायातातिचारिगुरुवत्सरे। प्राप्याशिगन्तृजीवस्य चातिचारे त्रिपक्षके। कम्पाद्यद्भुतसप्ताहे नोचस्थेऽर्के मलिम्लुचे। मासलङ्घितके चापि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे वरणाह्नितवर्षणे। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये। तृतीयेन तु सप्ताहे माङ्गल्यानि शुभान्विताः। विद्यारम्भकर्णवेधौ चूडोपनयनोद्वहान्। तीर्थस्नानगमनादृष्टं तथानादिसुरेक्षणम्। परीक्षाऽऽरामयज्ञांश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठा च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च। द्वाविंशदिवसावाले जीवस्य भार्गवस्य च। द्वादशप्रतिमंहत्यस्ते पादान्ते द्वादश क्रमात्। अस्तात् प्राक् परयोः पक्षं गुरोर्वार्द्धकबालते। पक्षं वृद्धोमहास्ते तु भृगुर्बालोदशाहिकः। पादान्ते तु दशाहानि वृद्धःशुक्रो दिनत्रयम्"। एवं व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालोक्तेः सिंहस्थरवौ तदकर्त्तव्यताकल्पनं साहसमेव हरितालिकादिव्रते तद्वर्जनस्यासम्भवात् तस्य सिंहस्थरविकालेनैव निमित्तत्वात् तच्च हरितालिकाशब्दे वक्ष्यते। सिंहस्थरविककालस्याशुद्धिबोधकवाक्यस्य व्रतारम्भप्रतिष्ठाव्यतिरिक्तविषयकत्वेनाप्युपपत्तेः। "पूर्णे काले व्रतानां तु प्रतिष्ठां विधिवच्चरेत्। न तत्र कालनियमस्तत्र विप्रे पराविदके इति" वचनात् पूर्णकाले न समयाशुद्धिर्बाधिकेति केचित्। एतद्वचनस्यामूलकत्वमाहुरन्ये।

**उद्याम** पु० उद्यम्यतेऽनेन उद्+यम—करणे घञ् वा वृद्धिः। ऊर्द्धनियमनसाधने रज्ज्वादौ। "शिक्यपाशं प्रतिमुञ्चते

षड्द्याम' विश्वाहृपाप्नोति" कात्या० १६,५,६, उद्‌जहुं यम्यते नियम्यते यैस्ते उद्यामाः षड्द्यामारज्जवः जह्वाकर्षणहेतवोयस्य" यजु० १२,१०२मन्त्रव्या०वेददी० "षड्द्यामं भवति षड्ढि दिशो मौञ्ज' त्रिवृत्" "संवत्सर एषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेतद्विभर्त्ति षड्द्यामं भवति षड्ढ्यृतवः" शत०ब्रा० ६,७,१,१६,१८,

**उद्याव** पु० उद्+यु— अप' बाधित्वा "उदि श्रयतियौतिपुद्रुवः" पा० घञ्। जह्वतोमिश्रणे अनुदि तु अवेव।

**उद्यास** पु० उद्+यस—घञ्। १उद्यमे कर्त्तरि संज्ञायां घञ्। २देवभेदे पु०। "आयासाय स्वाहा प्रयासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा" यजु० ३९,११, 'आयासादयो देवविशेषाः" वेददी०।

**उद्योग** पु०न० उद्+युज—घञ् अर्द्धर्चादि। १उद्यमे कर्म्मकरणार्थं प्रयासभेदे "उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी" नीति०। "यज्ञादिविषयोद्योगकर्म्मणा मनसा गिरा" या०स्मृतिः। "उद्योगं सर्व्वसैन्यानां दैत्यानामादिदेश ह" देवीमा०। भोजसेनवत् उत्तरपदलोपे २उद्योगपर्व्वणि च। "उद्योगः सैन्यनिर्याणं श्वेतोपाख्यानमेव च" भा०आ० १अ० "उद्योगे भरतश्रेष्ठः सर्व्वं कामगुणान्वितम्। भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान्" भा०स्वर्गा० ६अ०

**उद्योगपर्वन्** न० उद्योगस्य प्रतिपादकं पर्व्व। व्यासरचितभारतान्तर्गते पञ्चमे पर्वणि। "उद्योगपर्व्व विज्ञेयमतऊर्द्ध्वं महाद्भुतम्"। "उद्योगपर्व्व विज्ञेयं पञ्चमं शृण्वतः परम्" तत्तत्वृत्तान्तमुपवर्ण्य। "उद्योगपर्व्व निर्द्दिष्टं सन्धिविग्रहसम्मितम्" भा०आ० १अ०।

**उद्योगिन्** त्रि०उद्+युज-घिणुन्। उद्योगयुक्ते। "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः" हितो०।

**उद्योजक** त्रि० उद्+युज—ण्वुल्। प्रवर्त्तके।

**उद्र** पु०उनत्ति क्लिद्यति उन्द-रक्। जलविडाले। (उद्बिराल)

**उद्रङ्क(ङ्ग)** पु० सौभपुरे व्योमचारिपुरभेदे जटाधरः।

**उद्रथ** पु० उद्गतोरथो यस्मात्। १रथकीले। उद्गतरथतुल्यः पक्षो यस्य। ताम्रचूड़विहगे। मेदिनिः।

**उद्रपारक** पु० "धृतराष्ट्रकुले जातान् शृणु नागान् यथातथम्" इत्युपक्रम्य "भैरवोमुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः" भा०आ०५७अ० सर्पसत्रे हतनागभक्षाः। [च

**उद्रिक्त** त्रि० उद्+रिच—क्त। १अतिशयिते,२अधिके, ३स्फुटे

**उद्रेक** पु० उद्+रिच—घञ्। १वृद्धौ, २अतिशये, ३उपक्रमे च। "गतोभक्त्युद्रेकः परिणतिमसौ चक्रवपुषा" पुष्पदन्तः। "प्रक्षीयते धनोद्रेको जनानामविजानताम्" भा०व० १९२ अ०। "स्नेहोरागश्च तन्द्रा च मोहोद्रेकश्च केवलः" भा०अनु०२अ०। ४महानिम्बे स्त्री राजनि०।

**उद्वंशीय** न० सामभेदे। "तदाहुरोर्म्म एव वा एषा होत्रा यदच्छावाक्या यदच्छावाकमनुशन्तिष्ठत ईश्वरेर्भा भवितोरिति यद्युक्थं स्यात्त्वैककुभञ्चोद्वंशीयञ्चान्ततः प्रतिष्ठाप्ये वीर्य्यं वा एते सामनी वीर्य्य एवान्ततः प्रतितिष्ठन्ति"। ब्रा० "अतो यदीयमुक्थम् उक्थसंस्थं स्यात् उक्तदोषपरिहाराय त्वैककुभं चोद्वंशीयं चोभे सामनी अन्ततस्तृतीयसवनस्यान्ते प्रतिष्ठाप्ये त्वैककुभं ब्रह्मसाम उद्वंशीयमच्छावाकस्यामेत्येवं कर्त्तव्ये इत्यर्थः" ता०ब्रा०भा०।

**उद्वत्** त्रि०उद् उत्कर्षितत्स्वभावोऽस्त्यस्य वा मतुप् मस्य वः। १उत्कृष्टे २उन्नते च। "स उद्वतोनिवतोयाति वेविषत्" ऋ० ३,२,१०। "उद्वतः उच्छ्रायवतः" भा० "उद्वत्स्वस्मा अकृणोतना" १,१६१,११। "उद्वत्सूनतेषु" भा०।

**उद्वत्सर** पु०उत्क्रान्तोरविसंक्रान्तिं चान्द्रोमासोयत्र प्रा०ब०। वत्सरपञ्चकान्तर्गते वत्सरभेदे इदावत्सरशब्दे विवृतिः उदावत्सरोऽप्यत्र।

**उद्वपन** न०उद्+वप-ल्युट्। १दाने २उत्तोलने (तोला)। "उखायाभस्मोद्वपनमस्तमिते पात्रे" "अनुदिते भस्मोद्वपनादि" कात्या० १६,६,१,२। उत्क्रान्तोवपनम् अत्या० स०। ३उत्पाटने च।

**उद्वमन** न० उद्+वम-ल्युट् उदुपसर्गस्य धात्वर्थानुगममात्रमत्र। वमने। उद्गारशब्दे विवृतिः।

**उद्वयस्** त्रि० उद्गतं वयोऽन्नं यस्मात् प्रा०ब०। अन्नोत्पादके वायौ "अपां रसमुद्वयसं सूर्य्ये सन्तं समाहितम्" यजु० ९,३, "उद्गतं वयोऽन्नं यस्मात् वायोः स उद्वया वायुः वायुनैव हि धान्यानि निष्पद्यन्ते" वेददी०। उत्क्रान्तो वयः कालिकावस्थाम् अत्या०स०। अतिक्रान्तवयसि वृद्धे त्रि०।

**उद्वर्त्त** पु० उद्+वृत—घञ्। १अतिशये २आधिक्ये च। (उपचान) णिच्—घञ्। चूर्णविशेषैः २देहस्थमलाद्यपसारणव्यापारे।

**उद्वर्त्तन** न० उद्वर्त्त्यतेऽनेन उद्+वृत-णिच् करणे-ल्युट्।

१शरीरनिर्मलीकरणद्रव्यादौ। चूर्णैरुद्वर्त्तनैः पार्श्वौ तैला-ज्ञामवचूर्णयेत्” सुश्रु०। “नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च” या०स्मृतिः। भावे ल्युट्। २द्रव्यभेदैः स्नेहाद्यपहारार्थे व्यापारे च। “उद्वर्त्तनं वातहरं कफमेदोविनाशनम्। स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्” “यथास्वगन्धायस्थाह्नैर्विलैश्चोद्वर्त्तनं हितम्। शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः” “ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य्यम् यवपिष्टमुद्वर्त्तनार्थे” सुश्रु०। ३विलेपने, ४घर्षणे च। उद्+वृत-ल्युट्। ५उत्पतने ६उल्लुण्ठने च “गात्रस्योत्तनश्चैव हितं संवाहनानि च” सुश्रु० “चटुलशफरोद्वर्त्तनप्रेक्षितानि” मेघ०।

**उद्वर्त्तनीय** त्रि०उद्वर्त्तनाय हितम् छ। उद्वर्त्तनसाधने द्रव्ये “इदमुद्वर्त्तनीयं गोधूमयवचूर्णमिति” दुर्गार्चापद्धतिः।

**उद्वर्द्धन** न० उद्+वृध-ल्युट्। १अन्तर्हासे त्रिका०। णिच्-ल्युट्। २उद्गतासम्पादने। ल्यु। ३उद्गिसम्पादके त्रि०।

**उद्वर्हण** न०उद्+वर्ह-ल्युट्। १उन्मूलने २उत्पाटने ३उद्धरणे। क्त। उद्वर्हित उन्मूलिते त्रि०

**उद्वह** पु०उद्वहति ऊर्द्ध्वं नयति उद्+वह-अच्। पुत्रे “पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः” स्मृतेस्तस्य नरकत्राणकर्तृत्वात् तथात्वम् २वंशकारके “उदयमस्तमतञ्च रघूद्वहात्” “पार्थिवोद्वहद्रघूद्वहः”रघुः ३कन्यायां स्त्री ऊर्द्ध्वं प्रवहणायोत्परिवहति अच्। वायुसप्तकगते ४तृतीयस्कन्धस्थे वायौ पु०। आवहशब्दे विवृतिः“आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमानुत्पातभयशंसिनः। इत्येते क्षुभिताः सप्त मारुता गगनेचराः” हरि०२३६अ०। बा० भावे अप्। ५विवाहे “चूड़ोपनयनोद्वहान्” राजमा०।

**उद्वहन** न० उत्तोल्य वहनम्। उत्तोल्य स्कन्धादिना वहने। “क्षणेन देहोद्वहनाय शेषः” कुमा० “कैलासनाथोद्वहनाय भूयः” “आपीनभारोद्वहनप्रयत्नात्” रघु० २विवाहे च “भुवः प्रयुक्तोद्वहनक्रियायाः” रघुः। “स्वपितृभ्यः पितादद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्” स्मृतिः।

**उद्वादन** न० उद्+वद-णिच्-ल्युट्। १उच्चैरावेदने। “उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तं सान्निपातिकम्” कात्या०२५,१४,२, “उपदीक्षो नेदिष्ठः स्वानग्नीन् निहृत्य नखनिकृन्तनाद्युद्वादनान्तं सान्निपातिकं कर्म कुर्य्यात्” कर्कः। उद्वादनप्रकारश्च शत०ब्रा० ३,२,१,३९, दर्शितोयथा “अथैक उद्वदति दीक्षितोऽयं ब्राह्मणोदीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्योयोयज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्वाह”। “उद्वदति उच्चैरावेदयति” भा० २उच्चैर्वाद्यकरणे च उद्+वच-णिच् ल्युट्। उद्वावचनमप्यत्र न० “यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम्” अथ० ५,८,८,

**उद्वान** पु० उद्+वन-संभक्तौ घञ्। १उद्वमने णिच्-कर्म्मणि अच्। २उद्वमिते त्रि० रायमुकुटः।

**उद्वान्त** न० उद्+वम-क्त। कृतोद्वमने उद्गीर्ण्णे अमरः।

**उद्वाप** पु० उद्+वप-भावे घञ्। १उन्मूलने २उद्धरणे। ३शूर्पमाञ्च परिपरित्यागे पश्चात् “आवापोद्वापाभ्याम्” मल्ला०। कर्म्मणि घञ्। उद्वाप्य सञ्चीयमाने ४भस्मादौ। “कपालानि भस्मोद्वापे कुर्य्यात्” कात्या० ५,२,६, भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिखरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते सउच्यते कर्कः”। णिच् भावे अच्। ५मुण्डने।

**उद्वाय** पु० उद्+वा-घञ्। १उद्वासने २उपशमे। तत आचारे क्विप्। उद्वायति। “वायुर्वाव संवर्गोयदा वा अग्निरुद्वायति वायुमेवाप्येति” छा०उ०। “उद्वायति उद्वासनं प्राप्नोत्युपशाम्यति” भा०। गणव्यत्ययोवात्र।

**उद्वास** पु० उद्+वास-घञ्। स्वस्थानातिक्रमेण अस्तप्राप्तौ “अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वासः” छा०उ०भा०। ततः ब्रीह्यादि०इनि मतुप् वा। उद्वासिन् उद्वासवत् तद्वति त्रि० स्त्रियां ङीप्।

**उद्वासन** न० उद्+वस-ल्युट्। १मारणे उद्+वस+णिच्-ल्युट्। २विसर्जने। स्रुगादीनाम् उद्धोत्तलनेनान्यत्र स्थापनरूपे अग्न्याधानाङ्गे ३संस्कारभेदे “अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्चादाज्यग्रहणम्” कात्या०९,१,२, “अत्रोद्वासनमाहवनीय श्रायिणः २,७,८, “आज्याधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि” कात्या० ८,६,२१, ४स्थानान्तरनयने च “दक्षिणतोऽधिश्रयणोद्वासने” २५,८,९, भस्मनि अधिश्रयणमुद्वासनं च गार्हपत्याद्दक्षिणस्यां दिशि कुर्यात्”कर्कः।

**उद्वास्य** अव्य० उद्+वस-णिच्-ल्यप्। विसृज्येत्यर्थे “उद्वास्य देवं स्वेधाम्नि” तन्त्रम्। २स्थानान्तरं नीत्वेत्यर्थे च कर्मणि यत्। ३उत्तोलनीये ४उद्धरणीये च त्रि०।

उद्वाह पु० उद्+वह घञ्। विवाहे स च ज्ञानविशेष इति रघु० येन ज्ञानेन ममेयं भार्य्या, ममायं पतिरिति व्यवहारो भवति तादृशं ज्ञानम्। तच्च सम्बन्धभेदेनोभयनिष्ठम्। चरमसंस्कार इति नव्यनैयायिकाः। चरमत्वञ्च संस्कारप्रागभावासहचरितत्वम्। द्वितीयविवाहस्य संस्कारत्वाभावात् तत्प्रागभावसत्त्वेऽपि आद्यविवाहे चरमत्वाक्षतिः। तत्र च स्त्रियाः संस्काररूपतया विवाहत्वव्यवहारः। यस्य पुरुषस्य विवाहात् प्रागेव चूड़ादिषु जातेषु मरणम् तत्र पुरुषे चूड़ादौ संस्कारप्रागभावासहचरितत्वात् अतिव्याप्तेर्नैतत् नाद्यम्। किन्तु शास्त्रविहितसंस्कारान्तिमत्वमेव चरमत्वमिति युक्तम्। शास्त्रेषु च संस्कारेषु विवाहस्यैवान्तिमतया विधानादितरेषामुपान्तिमत्वादिनेति नातिप्रसङ्गः। यूपाहवनीयादौ यथा संस्कारादेव तत्तच्छब्दप्रवृत्तिः एवं शास्त्रविधिना कृतसंस्कारयोरेव दम्पत्योस्तच्छब्दप्रवृत्तिः। संस्कारस्यालौकिकत्वात् तत्तत्कर्मकलापसाध्य इति न आदानमात्रेण तत्सिद्धिः। अतएव "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेदिति" या० स्मृतौ "उद्वहेत द्विजोभार्याम्" इत्यादौ च विधिश्रवणम्, आदानमात्रस्य प्रमाणान्तरप्राप्ततया तदंशे विधित्वासम्भवात् अप्राप्तप्रापकस्यैव विधित्वात् अतएव "पाणिग्रहणिकामन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" इति मनुना मन्त्रविशेषाणामेव भार्य्यात्वरूपसंस्कारप्रयोजकत्वमभिहितम्। आदानमात्रस्य विवाहत्वे तस्य च लौकिकत्वात् स्वगृहीतेतरद्रव्यवत् तद्दानविक्रयापत्तिः स्यात् "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते" इति कात्यायनेन दानविक्रयाभ्यां भार्य्यात्वविगमाभावं वदता च विवाहस्य लौकिकत्वं निरासितम्। किन्तु विवाहसंस्कारस्य वैधत्वे यथाविधानमेव तत्र प्रवर्त्तितव्यम्। विधानातिक्रमे च कर्त्तुः प्रत्यवायोऽनिष्टं च फलं भवतीति गम्यते। तद्विधानप्रकारश्च आश्व०गृ० १,४, कण्डिकादौ दर्शितः अन्येऽपि प्रकारास्तत्तद्गृह्यकारैरुक्ताः। स च ततोऽवसेयः। उद्वाहे वर्ज्जनीयकन्याः स्मृतिषु दर्शिता यथा। "असपिण्डा च या मातुरसगोत्रा च या पितुः सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने" मनुः। असपिण्डाश्च असपिण्डशब्दे ५४१पृ० मतभेदेनोक्ताः। "अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" याज्ञ०। अन्यपूर्व्वाश्च। 'सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" काश्य०। "तत्र सपिण्डासगोत्रासमानप्रवरासु भार्य्यात्वमेव नोत्पद्यते रोगिण्यादिषु भार्य्यात्वे उत्पन्नेऽपि दृष्टदोष एव" मिता० एवमेव रघुनन्दनादयः। समानार्षाश्च आर्षशब्दे ८१२ पृष्ठे दर्शिताः। "सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि। जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः" इति उ०त० व्यासः। "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्" मिता० स्मृ०। "आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा। पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रिया। ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः" नारदः। बन्धवश्च उत्तराधिकारशब्दे १०९९पृ० दर्शिताः। "सगोत्रां चेदमत्वा उपयच्छेन्मातृवदेनाम् बिभृयात् समानार्षेयां विवाह्य चान्द्रयणं चरेत्" सुमन्तुः। 'समानगोत्रप्रवरां समुद्वाह्योपगम्य च। तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते। आप०। 'सर्व्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तदपत्यानि भगिन्यस्तदपत्यानि भागिनेयानि वा अन्यतोऽविवाह्याः अन्यथा सङ्करकारिण्यस्तथाध्यापयितुरिति" सुमन्तुः। "अध्यापयितुरेतद्विवाहमन्त्रपाठयितुरेतत् सङ्करकारित्वमिति" रत्नाकरादयः। अध्यापयितुर्गुरोः कन्या अविवाह्येति रघुनन्दनेनोक्तम् "समानप्रवरा वाऽपि शिष्यसन्ततिरेव च। ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते" मत्स्यपु०। "मातुर्य्यं नाम गुह्यं स्यात् सुप्रसिद्धमथापि वा। तन्नाम्नी या भवेत् कन्या मातृनाम्नीं प्रचक्षते। प्रमादात् यदि गृह्णीयात् प्रायश्चित्तं समाचरेत्। ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्ज्जयेत्" मत्स्यपु०। तथा श्यालिकापुत्र्या अपि पुत्रस्थानिकतया अविवाह्यत्वमुक्तं दत्तकमी० धृतम्। अत्र सपिण्डविषयेऽपवादः "सन्निकर्षेऽपि कर्त्तव्यं त्रिगोत्रात् परतो यदि"। मत्स्यपु०। "असम्बन्धा भवेद्मातुः पिण्डे नैवोदकेन वा। सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या"। मनुः। शूद्राणान्तु अतिदिष्टादिष्टगोत्रभागित्वेन सगोत्राविवाहो न निषिद्धः इति रघुनन्दनादयः। "द्विजानामसवर्णासु कन्यासूपयमस्तथा" वृह०ना० उक्तेः कलौ असवर्णाविवाहनिषेधात्तद्विशेषोऽनभिहितः। द-

त्रियस्यां मातुलकन्योद्वाहस्तु शिष्टैरपि क्रियते तस्य स्मृतिविरुद्धत्वेऽपि किञ्चित् श्रौतं लिङ्गमाश्रित्य तेषां तथाचरणमिति बहवः। तस्य श्रौतलिङ्गस्यान्यार्थपरता पराशरभाष्यादौ दर्शिता। अतएव द्वारकास्थयदुवंशदेशवासिनां तथाचरणे भाग०१०स्कन्दे। "यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानतः। व्यतरत् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम्"। "दौहित्रायानिरुद्धाय पौत्रीं रुक्म्याददद्धरेः। रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया जानन्नधर्मं तद्यौनं स्नेहपाशवशानुगः"। अधर्मं जानन्नित्युक्तेन तस्याधर्मत्वम्। "मातुलस्य सुतामूढ्वेति" प्रागुक्तवचनाच्च तस्याधर्मत्वम् सुव्यक्तमेव। स च विवाहोऽष्टविधः "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मनुः एतेषां लक्षणं तत्तच्छब्दे द्रष्टव्यम्। "येन भार्य्या कृता पूर्वं कृतोद्वाहा परस्य वै" हरिवं०।

**उद्वाहन** न० उद्+वह–णिच्–ल्युट्। १तुलादेरुद्वाहसम्पादने २उन्नयने ३स्थानान्तरनयने। उद्वाह्यते स्थानान्तरं नीयतेऽनेन उद्+वह–णिच्–करणे ल्युट्। ४उद्धारणसाधने "उद्घाटनं घटीयन्त्रं सलिलोद्वाहने प्रहेः" अमरः। उद्+वह–स्वार्थे णिच्–भावे ल्युट्। ५विवाहे। वाहनस्य हलाकर्षणस्योपरि वाहनं कर्षणं यत्र। ६द्विहल्ये क्षेत्रे यत्र प्रथममेकवारं कृष्टा पुनः कर्षणं क्रियते तादृशे क्षेत्रे हेम०। [ टके (कड़ि) हेम०।

**उद्वाहनी** स्त्री उद्वह्यते स्वार्थे णिच्–कर्मणि ल्युट्। वरा-

**उद्वाहिक** त्रि० उद्वाहः प्रयोजनमस्य ठक् संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिः। विवाहसाधने मन्त्रादौ "नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्" मनुः। वृद्धौ औद्वाहिकोऽप्यत्र त्रि०।

**उद्वाहित** पु०स्त्री उद्वाहोजातोऽस्य तारका० इतच्। जातविवाहे "बाले वृद्धे तथैवास्तं गते च दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्" राजमा०।

**उद्वाहिनी** स्त्री उद्वाहः उद्धरणं साध्यतयाऽस्त्यस्याः इनि ङीप्। रज्ज्वौ मेदिनिः।

**उद्विग्न** त्रि० उद्+विज–कर्त्तरि क्त। उद्वेगयुक्ते, "निमग्नोद्विग्नसंल्लीनैः पपे दीनैव मेदिनी" भट्टिः। दुःखपरिहारासमर्थतया २व्याकुलचित्ते, ३क्षुभिते च।

**उद्वीक्षण** न०उद्+वि+ईक्ष–भावे ल्युट्। १ऊर्द्ध्वदृष्टौ। करणे ल्युट्। २तत्साधने नेत्रे "सरोजनोद्वीक्षणकौमुदीमुखम्" रघुः।

**उद्वीत** त्रि० उद्+वि+इ–क्त। विशेषेणोद्गते। (अयला-पिड्डचीया) समन्तात् प्लाविते "ततोयुधिष्ठिरानीकमुद्वीतार्णवनिस्वनम्" भा० द्रो० १६अ०।

**उद्वृत्त** त्रि०उद्गतो वृत्तात् निरा०स०। १दुर्वृत्ते। उद्+वृत–क्त। २उत्क्षिप्ते ३मुक्तोज्झिते। ४अधिके। "उद्वृत्तोहि ग्रन्थः समधिकफलमाचष्टे" व्या० न्यायः। "कल्पक्षयोद्वृत्तमिवार्णवाम्भः" भा० आ० प०७। ५क्षुभिते च "उद्वृत्तनक्रात् सहसोन्ममज्ज" रघुः।

**उद्वेग** पु० उद्+विज–घञ्। १व्याकुलचित्ततायाम् २विरहजन्ये दुःखोद्गमे, "मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः" किरा०। "सहसोद्वेगमियं व्रजेदिति" रघुः। "गाल्लोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्याः" मेघ०। "बोजिह्वाग्रं बाधते उद्वेगं जनयति शिरोऽस्त्वृह्णीते नासिकाश्च स्रावयति स कटुकः" सुश्रु०। "सङ्क्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्त्तितम्" सा०द०। ३भये च। ४गुवाकफले न०। उद्गतोवेगोऽस्मात्। ५निश्चले, ६स्तिमिते ७धीरगामिनि च त्रि०।

**उद्वेजन** त्रि० उद्+विज–भावे ल्युट्। १उद्वेगे अमरः "परदाराभिमर्शेषु प्रवृत्तान् नृ महीपतिः। उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्" मनुः तस्मै साधु छ। उद्वेजनीय उद्वेजके त्रि० "परिहरेदुद्वेजनीयाश्च कथाः" सुश्रु०।

**उद्वेजित** त्रि० उद्+विज–णिच्–क्त। कृतोद्वेगे "उद्वेजिता वृष्टिभिराश्रयन्ते" कुमा०।

**उद्वेदि** त्रि०उन्नता वेदिर्यत्र प्रा० ब० गतलोपः। उन्नतवेदिके। "विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्" रघुः

**उद्वेप** पु०उद्+वेप–भावे घञ्। १उत्कम्पने। कर्त्तरि अच्। २तद्युक्ते त्रि०। ततः तेन निर्वृत्तमित्यर्थे सङ्कला० अण् औद्वेप तन्निर्वृत्ते त्रि०। स्त्रियां ङीप्।

**उद्वेल** त्रि० उत्क्रान्तोवेलाम् अत्या० स०। १वेलातिक्रान्ते २मर्य्यादातिक्रान्ते "भवमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः" रघुः

**उद्वेष्टन** न० उद्+वेष्ट–ल्युट्। १हस्तपादयोर्बन्धने, २उपलेपे च। "वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः" "हृदयोद्वेष्टनं तन्द्रा लालासुतिररोचकः" सुश्रु०। उद्गतं वेष्टनात् निरा०त०। २उन्मुक्तबन्धने त्रि०। "कयाचिदुद्वेष्टनवान्तमाल्यया" रघुः कुमारश्च

**उद्वोढृ** पु० उद्+वह–तृच्। परिणेतरि। "उद्वोढापि भवेत् पापी संसर्गात् कुलनायिके!। वेश्यागमनजं पापं तस्य पुंसोदिनेदिने" महानि०त०।

**उभ्रस** उञ्छे क्र्या० पर० सक० सेट्। उभ्रस्नाति औभ्रासीत्

उभ्रसाम्-बभूव आस चकार । [सयति ते । औद्भ्रिसत् त

उभ्रस उत्क्षेपे उञ्छे च (कणश आदाने) चु॰सक॰सेट् । उभ्र-

उन्द क्लेदने रुधा॰पर॰सक॰सेट् । उनत्ति उन्तः उन्दन्ति उ-
न्द्यात् उनत्तु । औनत् औन्ताम् औन्दन् औनः—औ-
नत् । औन्दीत् । उन्दाम्—बभूव आस चकार । उन्दिता
उन्दिष्यति औन्दिष्यत् । उन्दन् उन्दनम् उत्तिः उन्नः—
उत्तः । "इतप्रुषा मनसा हव्यमुन्दन्" ऋ॰ २,३,२ ।
"यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयोजायन्ते" शत॰
७,५,२,३ । भ्वादित्वमपि । "शिरश्चिदुन्दति अदितिः
केशान् वपत्वाप उन्दन्तु वर्चसः इति" आश्व॰ गृ॰ १,१७,
७ । णिच् उन्दयति-ते औन्दिदत्-त सन् उन्दिदिषति ।

उन्दुर(रु) पु॰ उन्द-उर-उरु वा । मूषिके मूषिक-
भेदास्तद्दंशोपद्रवाश्च सचिकित्साः सुश्रु॰दर्शिता यथा ।
"अथातो मूषिककल्पं व्याख्यास्यामः । पूर्व्वमुक्ताः शुक्र
विषा मूषिका ये समासतः । नामलक्षणभैषज्यैरष्टादश
निबोध तान् । लालनः पुत्रकः कृष्णो हंसिरश्चिक्किर-
स्तथा । कुच्छुन्दरोऽलसश्चैव कषायदशनोऽपि च । कुलि-
ङ्गश्चाजितश्चैव चपलः कपिलस्तथा । कोकिलोऽरुणसंज्ञश्च
महाकृष्णस्तथोन्दुरः । श्वेतेन महता सार्द्धं कपिलेनाखुना
तथा । मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः । शुक्रं
पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा । नखदन्तादिभि-
स्तस्मिन् गात्रे रक्तं प्रदुष्यति । जायन्ते ग्रन्थयः शोफा
कर्णिका मण्डलानि च । पिडकोपचयश्चोग्रा विसर्पाः
किटिभानि च । पूर्व्वभेदोरुजस्तीव्रा ज्वरोमूर्च्छा च दारु-
णा । दौर्ब्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् । दष्ट-
रूपं समासोक्तमेतच्च व्यासतः शृणु । लालास्रावो
लालनेन हिक्काच्छर्द्दिश्च जायते । तण्डुलीयककल्कन्तु
लिह्यात्तत्र समाक्षिकम् । पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च
जायते । चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः ।
शिरीषेङ्गुदकल्कन्तु लिह्यात्तत्र समाक्षिकम् । कृष्णेना
सृक् छर्दयति दुर्द्दिनेषु विशेषतः । शिरीषफलकुष्ठन्तु
पिबेत् किंशुकभस्मना । हंसिरेणान्नविद्वेषो जृम्भा
लोमाञ्चहर्षणम् । पिबेदारग्वधादिन्तु सुवान्तस्तत्र मान-
वः । चिक्किरेण शिरोदुःखं शोफो हिक्का वमी तथा ।
जालिनीमदनाङ्कोठकषायैर्वामयेत्तु तम् । कुच्छुन्दरेण दष्ट-
च्छर्द्दिर्ज्वरोऽलावण्यमेव च । ग्रीवास्तम्भः पृष्ठशोफो गन्धा-
ऽज्ञानं विसूचिका । चव्यं हरीतकीं शुण्ठीं विडङ्गं पि-
प्पलीं मधु । यत्नात्कर्षमचारं दहत्वाचाल दापयेत् । ग्रीवाऽ-
स्तम्भोऽलसेनोर्द्ध्ववायुर्दंशे रुजा ज्वरः । महागदं सर्पिषम्कं
लिह्यात्तत्र समाक्षिकम् । निद्रा कषायदन्तेन हृच्छोषः
कार्श्यमेव च । क्षौद्रोपेताः शिरीषस्य लिह्यात् सार-
फलत्वचः । कुलिङ्गेन रुजः शोफो राज्यश्च दंशम-
ण्डले । सह्ये समिन्धुवारे च लिह्यात्तत्र समाक्षिके ।
अजितेन वमी मूर्च्छा हृद्ग्रहः कृष्णनेत्रता । तत्र स्नु-
हीक्षीरपिष्टां कालिन्दीं मधुना लिहेत् । चपलेन भवे-
च्छर्द्दिर्मूर्च्छा च सह तृष्णया । सभद्रकाष्ठां सजटां क्षौ-
द्रेण त्रिफलां लिहेत् । कपिलेन व्रणे कोथो ज्वरो
ग्रन्थ्युद्गमस्तथा । क्षौद्रेण लिह्यात्त्रिफलां श्वेतां-
चापि पुनर्नवाम् । ग्रन्थयः कोकिलेनोग्रो ज्वरो दाहश्च
दारुणः । वर्षाभूनीलिनीक्वाथसिद्धं तत्र घृतं पिबेत् ।
अरुणेनानिलः क्रुद्धो वातजान् कुरुते गदान् । महा-
कृष्णेन पित्तञ्च श्वेतेन कफ एव च । महता कपिलेना-
सृक् कपोतेन चतुष्टयम् । भवन्ति चैषां दंशेषु ग्रन्थि-
मण्डलकर्णिकाः । पिडकोपचयाश्चोग्राः शोफश्च अप-
दारुणः" ।

उन्दु र(रु)कर्णी स्त्री उन्दुरस्य कर्ण इव पर्णमस्याः गौ॰ङीष् ।
आखुकर्ण्याम् । (उन्दुरकानी) स्वार्थे कन् तत्रैव

उन्दूरु पु॰ उन्द-ऊरु । मूषिके । [ पक्षे उत्त आर्द्रे त्रि॰ ।

उन्न त्रि॰ उन्द-क्त । क्लिन्ने १आर्द्रे (भिजे) २दयापरे च ।

उन्नत त्रि॰उद्+नम-क्त । १उच्चे, २महति च । "उन्नतेन
स्थितिमता धुरमुद्वहता भुवः" कुमा॰ "स्थितः सर्वो-
न्नतेनोर्वीम्" रघुः । "बन्धुरं तून्नतानतम्" अमरः ।
"मधुरोन्नतभ्रुललितञ्च दृशोः" माघः ।
सि॰शि॰ उक्ते दिनमानज्ञानसाधने २उपायभेदे न॰ ।
"उन्नतप्रभाभिमतदिक्क्रियमेव तावत् तामेव कालनियमेन च
वच्मि भूयः । स्वादुन्नतं द्युगतशेषकयोर्यदल्पं तेनोनितं
दिनदलं नतसंज्ञकं च । अथोन्नताद्धनयुताच्चरेण क्रमादुद-
ग्दक्षिणगोलयोर्ज्या । स्यात् स्फुटमेतद्गुणितं द्युमौर्व्या
व्यासार्धभक्तं च कलाभिधानम्" शि॰। "दिवसस्य यद्गतं यच्च
शेषं तयोर्यदल्पं तदुन्नतसंज्ञं ज्ञेयम् । तेनोन्नतेनोनीकृतं दिन-
दलप्रमाणं नतसंज्ञं भवति । अथोन्नतादुन्नतकालादुत्त-
रगोले च तेनान्विता दक्षिणे युताद्या ज्या तत्सूत्रम् ।
सा सूत्रसंज्ञेत्यर्थः । तत् सूत्रं द्युज्यया गुणितं त्रि-
ज्यया भक्तं कलासंज्ञं भवति । अत्रोपपत्तिः । यस्मिन्
काले छाया साध्या तस्मिन् काले स्वाहोरात्रवृत्ते यावती-
भिर्घटिकाभिः क्षितिजादुन्नतो रविस्तावदुन्नतसंज्ञा । येन

कालेन मध्याह्नात्ततस्य नतसंज्ञा । अथ चरेणोनयुतस्योन्नतकालस्य किल ज्या साध्या । सा च ज्या मध्यावधिर्भवति । स च मध्यप्रदेशोऽहोरात्रवृत्तस्योन्मण्डलसंपाते भवति । यत उन्मण्डलसंपाताभ्यामूर्ध्वमहोरात्रवृत्तस्यार्धमधोऽर्धम् । अत उन्मण्डलावधेर्जीवा साध्या । क्षितिजोन्मण्डलयोरन्तरं चरार्धम् । अतश्चरार्धेन वर्जितादुन्नतादुत्तरगोले, दक्षिणे तु युतात् । यत उत्तरगोले क्षितिजादुपर्युन्मण्डलं, दक्षिणेऽधः । तस्मात् कलाद्या ज्या साधिता सा त्रिज्यावृत्तपरिणता । सा च सूत्रसंज्ञा । अथ यदि त्रिज्यावृत्त एतावती तदा द्युज्यावृत्ते कियतीत्यनुपातेन द्युज्यावृत्तपरिणता । सा च कलासंज्ञा" प्रमि०।

सि०शि० उक्ते यन्त्राकाशवस्तुज्ञानार्थे ४उपायभेदे च । "यन्त्रवेधविधिना ग्रहोन्नतिर्या नतिश्च भवतोऽवलम्बकौ । तौ क्रमाद्विषुवदंशकाह्वयैवेऽथ वा नतसमुन्नता लवाः" शि० "चक्रयन्त्रेण पहवेधवद् ध्रुवं विध्येत् । तत्र यन्त्रनेम्यां ये उन्नतांशास्तेऽक्षांशाः । ये नतास्ते लम्बांशाः । अथ वा विषुवद्दिनार्धेऽर्कस्य नतोन्नतांशास्तेऽक्षलम्बांशा इति युक्तियुक्तम्" प्रमि०। "उन्नतं द्युनिशमण्डले कुजात् यावत् द्युतिविधौ हि तज्ज्यका । तिर्यगत्र यतोऽप्यकर्णवच्छेदको न तु नरः स लम्बवत्" शि०। "दृङ्मण्डले क्षितिजादुपरि ग्रहपर्यन्तं येऽंशास्त उन्नताः खमध्याद्धस्ते नताः । उन्नतांशानां ज्या शङ्कुः । नतांशज्या दृग्ज्या शङ्कुः छायाकर्णाविप्रामिहनः कार्यः । दृक्शङ्कुः कुदलेनोच्छ्रितत्वात् । अयमर्थो ग्रहच्छायाधिकारे व्याख्यात एव" प्रमि०।

"उदग्दिशं याति यथा यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम् । उदग्दिशं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः" सि०शि०।

ततः भावे ष्यञ् औन्नत्य न० । तल् उन्नता स्त्री । त्व उन्नतत्व न०, तद्भावे "तदेव नैसर्गिकमुन्नतत्वम्" रघुः

**उन्नतकाल** पु० सि०शि० उक्ते छायातः कालज्ञानसाधने प्रक्रियाभेदे "पलश्रुतिघ्नस्त्रिगुणस्य वर्गो द्युज्येष्टकर्णाहतिहृन्नवेहा । इष्टान्त्यका तद्रहितान्त्यका या भवन्ति या उत्क्रमचापलिप्ताः । नतासवस्ते खरदलं तैरूनीकृतं चोन्नतकाल उक्तम्" शि० । "त्रिज्यावर्गः पलकर्णेन गुण्यः द्युज्यया इष्टकर्णस्य च घातेन भाज्यः यत्फलं लभ्यते सेष्टान्त्यका । तयेष्टान्त्यया रहितया अन्त्याया यच्छेषं तस्योत्क्रमेण धनुः कार्यं तस्य धनुषोयावन्त्यः कलास्तावन्तस्मिन् कालेन नतासवो ज्ञेयाः तैर्नतासुभिरूनीकृता- दिनदलासव उन्नतासवः स्युः । प्रकारान्तरेण त्रैराशिकनयेनोपपत्तिः । यदीष्टच्छायाकर्णेन द्वादशाङ्गुलशङ्कुर्लभ्यते तदा त्रिज्याकर्णेन क इति । अत्र त्रिज्याया द्वादश गुण इष्टकर्णो हरः । फलं महाशङ्कुः । अथ तस्य हृतिकरणार्थमनुपातः । यदि द्वादशाङ्गुलशङ्कोर्विषुवत्कर्णः कर्णस्तदास्य महाशङ्कोः क इति । पूर्वं त्रिज्याया द्वादश गुण इदानीं हरः । अतस्तुल्यत्वाद्द्वादशाङ्कयोर्गुणहरयोर्नाशे कृते सति त्रिज्यायाः पलकर्णो गुण इष्टच्छायाकर्णो हरः फलमिष्टहृतिः । अथेष्टान्त्याकरणायानुपातः । यदि द्युज्यया त्रिज्या लभ्यते तदिष्टहृत्या किमिति । इदानीं त्रिज्या गुणो द्युज्या हरः । हरयोर्घातो हर इति द्युज्येष्टकर्णाहतिर्भवति । गुणयोर्घाते त्रिज्यावर्गः पलकर्णगुणितो भवति । एवं फलमिष्टान्त्यका । तया वर्जिताया अन्त्याया यदवशेषं सा नतस्योत्क्रमज्या चरसंज्ञा । अतस्तस्या धनुरुत्क्रमेण स नतकालः स्यात् । नतकालो दिनार्धात् पतित उन्नतकालः स्यादित्युपपन्नम्" प्रमि०

**उन्नतानत** न० उन्नतं च तदानतञ्च । उच्चनीचस्थानादौ । "बन्धुरं तून्नतानतम्" अमरः ।

**उन्नति** स्त्री उद्+नम-क्तिन् । १वृद्धौ, २उदये, ३गरुडभार्यायाञ्च तत्र चन्द्रशृङ्गोन्नतिः सि०शि० उक्ता यथा "मासान्तपादे प्रथमेऽथ वेन्दोः शृङ्गोन्नतिर्यद्दिवसेऽवगम्या । तदोदयेऽस्ते निशि वा प्रसाध्यः शङ्कुर्विधोः स्वोदितनाडिकाद्यैः" शि०। "कृष्णाष्टम्या उपरि प्रथमेऽथ वा शुक्लाष्टम्याः प्रागेव यस्मिन्नभीष्टदिने शशिशृङ्गोन्नतिर्ज्ञातुमभीष्टा तस्मिन् दिने मासान्तपाद औदयिकौ चन्द्रार्कौ स्पष्टौ कार्यौ । प्रथमचरणे त्वस्तकालिकौ ततः शृङ्गोन्नतिर्ज्ञेया । निशि वा । एतदुक्तं भवति । मासान्तपाद उदयकाले शशिशृङ्गोन्नतिः साध्या । प्रथमचरणे त्वस्तकाले । अथ वा किमुदयास्तनियमेन । यत्रोदये तत्रोदयात् प्रागिष्टघटीतुल्यकाले वा यत्रास्ते तत्रास्तादुपरीष्टासु घटीषु वा शृङ्गोन्नतिः साध्या । तत्र तात्कालिकौ चन्द्रार्कौ कृत्वा चन्द्रस्य स्फुटकान्त्युदयास्तलग्नोन्नतघटिकादिभिस्तदुपकरणैः शङ्कुः साध्यः । अत्रोपपत्तिः । चन्द्रस्यार्धादूने शुक्ले तत्कोटी शृङ्गाकारे भवतः । तत्रेष्टकाले कतरा शृङ्गोन्नतिर्भविष्यतीति ज्ञातव्यम् । तत्र शुक्लस्य शृङ्गाकारतार्धादूने शुक्ले । तच्चार्धादूनत्वं मासान्तपादे प्रथमे च संभवति । द्वितीयतृतीययोरपि चरणयोर्न्न्युनप्रादिभिः कृष्णशृङ्गोन्नतिरानीता सा मम न सम्म-

ता। नहि नरैः कृष्णशृङ्गोन्नतिः स्पष्टोपलभ्यते। प्रसिद्धा तु शुक्लशृङ्गोन्नतिः। अत उक्तं मासान्तपादे प्रथमेऽथ वेति। "वधोजौ करिकुम्भ विभ्रकरीमत्युन्नतिं, गच्छतः"। लोकेनोन्नतिमायाति" इति च सा॰द॰

**उन्नतीश** पु॰ ६त॰। गरुड़े त्रिका॰।

**उन्नद्ध** त्रि॰ उद्+नह–क्त। १उद्बद्धे। उत्कटे च। "अहङ्कृतेज उन्नद्धमस्तशौऽस्मृतेजसा" भा॰ १स्क॰। उन्नद्धं उत्कटम्"। श्रीधरः।

**उन्नमन** न॰ उद्+नम–ल्युट्। १उन्नतौ। णिच्–ल्युट् न दृद्धिः। २उत्तोलने सुश्रुतोक्ते ३यन्त्रकर्मभेदे च। तानि चतुर्विंशतिः यथोक्तं तत्रैव। "यन्त्रकर्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाकुञ्चनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणादारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः"। उन्नमनञ्च प्रचारुधिरस्रावबाधनं यथोक्तं तत्रैव "सन्धिगतः पीड्यमानो न प्रवर्त्तेत आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनात् आसनशयनादेश ब्रूवति"।

**उन्नमित** त्रि॰ उद्+नम–णिच्–क्त। १उत्तोलिते, २ऊर्द्धीकृते च "अथ प्रयत्नोन्नमितानमत्फणैः" कुमा॰ "कश्चिदुन्नमिताननौ" रघुः। [ मचिह्नतं तत्" माघः

**उन्नम्र** त्रि॰ उद्+नम–रन्। उन्नते "उन्नम्रताम्रपटमण्डप

**उन्नय** पु॰ उद्+नी–"क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इत्युक्तेः अच्। कूपादितो जलादेरुत्तोलने अमरः।

**उन्नयन** न॰ उद्+नी–ल्युट्। १वितर्के, २ऊर्द्ध्वप्रापणे च। "अनादिष्टांसेदोन्नयनश्रुतेः कात्या॰" ९,५,२४, उन्नयन श्रुतिश्च। "अतोहि देवेभ्य उन्नयन्त्यतोमनुष्येभ्यः" शत॰ब्रा॰ ४,५,६,२, "चमसोन्नयनकाले चाहूय दक्षोन्मृद्य तन्नमसेनोन्नयेत्" कात्या॰ १०,९,२१, "तेष्वेवोन्नयनमप्यभि सोमालुन्नयन्तीति श्रुतेः" कात्या॰ २२,१०, ५, "उन्नयन्त्यस्मात् अपादाने ल्युट्"। ३पूतभृत्पात्रे। "उन्नयने च" कात्या॰ २५,१२,१४, तदेव भवति उन्नयत्यस्मादित्युन्नयनम् पूतभृदुच्यते" कर्कः। उन्नमितं नयनं येन प्रा॰ब॰। उन्नमितनेत्रे त्रि॰।

**उन्नस** त्रि॰ उन्नता नासा यस्य अच् समा॰ नसादेशः। उन्नतनासिके। "उन्नसं दधतो मल्लाम्" भट्टिः।

**उन्नाद** पु॰ उद्+नद–घञ्। उच्चशब्दे "शरभोन्नादसंजुष्टम् नानाकुसुमनिषेवितम्" भा॰व॰१५८अ॰।

**उन्नाभ** पु॰ उन्नता नाभिर्यस्य अच् समा॰। सूर्य्यवंश्ये नृपभेदे "उन्नाभ इत्युद्गतनामधेयः" रघुः अर्संज्ञायान्तु न अच्। उन्नाभिरित्येव त्रि॰। उन्नता नाभिः प्रा॰स॰। उन्नतनाभौ पुंस्त्री॰।

**उन्नाय** पु॰ उद्+नी–"अवोदोर्नियः" पा॰ घञ्। १ऊर्द्ध्वनयने २वितर्के ३उद्धये च "उन्नायानधिगच्छन्तः प्रज्ञावैवसुधा भृताम्" भट्टिः। [हेमच॰।

**उन्नाह** पु॰ उद्+नह–घञ्। १उत्तोलबन्धने २काञ्जिके न॰

**उन्निद्र** त्रि॰ उद्गता निद्रा मुद्रा यस्य। १विकसिते निद्रायाद्वस्य मुकुलीभावरूपनेत्रनिमीलनाधर्कत्वेन तथात्वम्। "उन्निद्रपुष्पचयचम्पकपुष्पमाला" माघः। २निद्रारहिते च। "तामुन्निद्रामवनिशयनां सौधवातायनस्थाम्" मेघ॰। "शय्याप्रान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः" शकु॰। उन्निद्रता च जागरणं तच्च विप्रलम्भशृङ्गारे कामकृतदशविधावस्थाभेदः तासामवस्थाः ४४७पृ॰ उक्ताः।

**उन्नीत** त्रि॰ उद्+नी–क्त। १ऊर्द्धं नीते २वितर्किते च।

**उन्नेतृ** त्रि॰ उद्+नी–तृच् स्त्रियां ङीप्। १ऊर्द्ध्वनायिनि २उद्भावके च षोड़शसु ऋत्विक्षु ३ऋत्विग्भेदे पु॰ स च अच्छावाकशब्दे ८५पृ॰ दर्शितः। तस्य च गीते ह्युन्नतास्मादनादुदकादुत्तारकत्वेन तत्वम् "उन्नेतैनानुन्नयति" "उन्नेतरुन्नयोन्नयोन्नेतर्वसो अभ्युन्नयानइत्युन्नीयमानाजपन्ति" आश्व॰ श्रौ॰ ६,१२,१२,१४। "उन्नेता यथाखोक्तविधिना सर्वानुदकादुत्तारयति" "उन्नेतरित्येतं मन्त्रं जपन्ति" ना॰द॰ "आहूतमुन्नेता द्रोणकलशाभिद्रावीय प्रतिभ्रद्धोपहवमिडाऽवेक्षेत" आश्व॰ श्रौ॰ ६,१२,१। "अथोन्नेत उपांशुसवनं प्रयच्छन्नथाहोन्नेतारमासृज ग्रावाण" इति संप्रेच्छाति प्रतिप्रस्थाता संस्रानुन्नेता चमसेनोदञ्चनेन वा" शत॰ब्रा॰ ४,२,५,१८,२१। ततः उद्गाता॰ अच्च न दृद्धिः। उन्नेत्र उन्नेतृसम्बन्धिनि त्रि॰। "प्रतिप्रस्थातान्नीध्रोन्नेत्र" कात्या॰ २४,४,४६। इतौ औन्नेत्रमित्यपि तत्रैव त्रि॰।

**उन्नेय** त्रि॰ उद्–नी–यत्। १ऊर्द्ध्वनयनीये २उद्भावनीये च।

**उन्मज्जक** पु॰ उद्+मस्ज–ण्वुल्। "कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते। उन्मज्जकः स विज्ञेयस्तापसोलोकपूजितः" इत्युक्तलक्षणे १तापसे। जलादेरुपरि २उत्प्लावके त्रि॰। [ (भाषा) प्लवने।

**उन्मज्जन** न॰ उद्+मस्ज–ल्युट्। मज्जनविपरीतव्यापारे

**उन्मण्डल** न॰ उन्नमं मण्डलम्। मि॰ मि॰ उक्ते दिनरात्र्योः वयवृद्धिसाधने मण्डलभेदे। यथाह तत्रैव।

"पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" शि०। "समवृत्तक्षितिजयोर्यौ पूर्व्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च यन्निबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः" प्रमि०। सूर्य्यसिद्धान्ते रङ्गनाथेन च स्पष्टमुक्तं यथा "प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम्। उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्त्यते" सू०। "प्राक्पश्चिमाश्रिता पूर्व्वपश्चिमसम्बद्धा साधिता रेखा समवृत्तमुच्यते। सैव रेखोन्मण्डलं विषुवन्मण्डलम्। चः समुच्चये। उभयसंज्ञकं कथ्यते। अत्रोपपत्तिः। क्षितिजपूर्वापरवृत्तसंयोगौ पूर्वापरे तन्मूलं पूर्वापरस्थलमिति। पूर्वापरवृत्तस्य भूमावूर्द्ध्वाधरानुकारिवृत्तत्वेनादर्शनाद्रेखाकारतयैव दर्शनाच्च पूर्वापरवृत्तमपि तन्मूलम्। पूर्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखा सममण्डलसंज्ञोक्ता। अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्संयोगयोः संलग्नत्वात् तन्मध्यस्थलत्वेन पूर्वापरस्थलस्यापि सत्त्वात् पूर्वापरस्थलमुन्मण्डलसंज्ञम्। एतेनान्यदेशक्षितिजसंज्ञया स्वदेशक्षितिजसंज्ञा सुतरां सिद्धेति पूर्वापरस्थलस्य क्षितिजवृत्तसंज्ञा द्योतिता। पूर्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुक्तक्षितिवृत्तस्य क्षितिजानुकारित्वाच्च" रङ्ग०। "उद्वृत्तादयोऽप्यत्र। परोऽथ वोद्वृत्तगते रवौ श्रुतिः" सि० शि०। प्रा० स०। २अर्द्धमण्डले त्रि०।

**उन्मण्डलकर्ण** पु० सि०शि० उक्ते छायया दिनज्ञानार्थे उन्मण्डलस्थार्कस्य छायाकर्णे। तदानयनं तत्रैव यथा "युतायनांशार्कभुजज्यया स्वराभ्रतिथ्यंशभुवो" (१०१५ २०) हृताः परः। पलश्रुतिघ्नः पलभाविभाजितः परोऽथ वोद्वृत्तगते रवौ श्रुतिः" शि०। "अर्कस्य सायनांशस्य बृहती भुजज्या साध्या। न लघुखण्डज्यातः। तया ज्यया पूर्णाग्नितिथिशून्यशशिनो (१०१५२०) भाज्याः। यल्लब्धमसौ पराख्यः। स परः पलकर्णेन गुण्यः पलभया भाज्यः। फलमुन्मण्डलगतस्यार्कस्य छायाकर्णो वा भवति" प्रमि०।

**उन्मण्डलशङ्कु** पु० सि० शि० उक्ते चलचेलप्रदर्शनार्थे उन्मण्डलशङ्कौ। "अपादिखण्डं कथिता च कोटिरुद्वृत्तना दोः श्रवणोऽपमज्या। उद्वृत्तना कोटिरथापकाप्यखण्डं भुजस्तच्छ्रवणः क्षितिज्या। खण्डं यदूर्द्ध्वं समवृत्तशङ्कोर्यत् तद्वृतेस्तावथ कोटिकर्णौ। अपादिखण्डं भुज एवमष्टौ चेत्राख्यमून्यचमनामि तावत्" शि०। "अत्र किल निरक्षदेशे यदेव विषुवन्मण्डलं तदेव सममण्डलम्। तथा क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति। तत्र ध्रुवौ च क्षितिजासक्तौ। अथ निरक्षदेशाद्द्रष्टा यथा यथोत्तरतो गच्छति तथा तथोदग्ध्रुवमुन्नतं पश्यति। तथा यैर्भागैर्ध्रुव उन्नतस्तैरेव भागैरक्षसंज्ञैः स्वस्वस्तिकाद्दक्षिणतो विषुवन्मण्डलं नतं पश्यति। विषुवन्मण्डलस्य तिर्य्यक्स्थितत्वात् तदाश्रितान्यहोरात्रवृत्तानि स्वस्थाने तिरश्चीनानि भवन्ति। अतः साक्षे देशे खगोलवलयानां तिरश्चीनखगोलवलयानां च संपातात् तान्यक्षिचेत्राण्युत्पद्यन्ते। तान्यक्षक्षेत्रसंज्ञान्यपयोगित्वात् कथ्यन्ते। अक्षभा नाम पलभा प्रसिद्धा सा भुजः। द्वादशाङ्गुलः शङ्कुः कोटिः। अक्षकर्णस्तत्र कर्णः" प्रमि० उद्वृत्तनाप्यत्र। एवमुन्मण्डलादिशङ्कुरप्यत्र।

**उन्मत्त** पु० उद्+मद–करणे क्त। १धूस्तूरे "विल्वैरखण्डार्कवर्षाभूदग्धिरयोन्मत्तशिग्रुभिः" सुश्रु०। २मुचकुन्दवृक्षे च। कर्त्तरि क्त। ३उन्मादवति, ४ग्रहावेशवति च त्रि०। "बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम्" नारदः। "उन्मत्तेन वातिकाद्युन्मादयुक्तेन" मिता०। "उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितं च यत्। स्त्रियो यच्च प्रभाषन्ते नास्ति तत्र व्यतिक्रमः" म० त० मत्स्यपु०। ४उद्धते च उन्मत्तगङ्गम्। अतिशयेन मत्तः। ५अतिमत्ते "मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः" पञ्चतन्त्रम्।

**उन्मत्तक** पु० उन्मत्त इव कन्। १तापसभेदे। अवधूतशब्दे ४२८ पृष्ठे विवृतिः। स्वार्थे कन्। २उन्मत्तार्थे। "क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः" याज्ञवल्क्यः।

**उन्मत्तगङ्ग** अव्य० उन्मत्ता उद्धता गङ्गा यत्र संज्ञायाम् अन्यपदार्थत्वे अव्ययी०। देशभेदे। "उन्मत्तगङ्गं नाम देशः" सि०कौ०।

**उन्मत्तगीत** त्रि० उन्मत्तेन गीतम् "हृत्यद्भूतेन क्तशमिति" पा० २त०। उन्मत्तेन गीते एवम् उन्मत्तप्रलपितादयोऽपि उन्मत्तेन प्रलपिताद्यर्थे त्रि०।

**उन्मथन** न० उद्+मथ–भावे ल्युट्। १उन्मर्द्दने २हिंसने। "अन्योन्यसूतोन्मथनादभूताम्" रघुः "वायुनोन्मथनं चापि भ्रमस्य क्रमतस्तथा" सुश्रु०। सुश्रुतोक्ते ३यन्त्रकर्मभेदे च उन्मन्थनशब्दे ११९०पृ० दृश्यम्। कर्त्तरि ल्यु। ४उन्मर्द्दनकारके त्रि०। "विपक्षचित्तोन्मथना नखव्रणाः" किरा०।

**उन्मथित** त्रि० उद्+मथ-क्त। उद्घृष्टे मर्द्दिते।

**उन्मद** पु० उद्गतो मदो मत्तताऽस्य प्रा० ब० गतलोपः।

१उद्गतमदे । "उन्मदद्विरदभसवर्षं वदनवदलमालतमाले" जयदेवः "उदीरयामासुरिवोन्मदानाम्" रघुः "अयोधि-लोलोन्मदराजहंसे" रघुः। २अ०। २उद्गतमदसाधने "मधु-कराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे" माघः।

**उन्मदन** त्रि० उद्गतोमदनोऽस्य प्रा०ब० भूतलोपः। उद्गत-कामे। "तदाप्रभृत्युन्मदना बभूव" कुमा०।

**उन्मदिष्णु** त्रि० उद्+मद-ताच्छील्ये इष्णुच्। उन्मादशीले।

**उन्मनस्** त्रि० उद्भ्रान्तं मनोऽस्य। १उत्कण्ठायुक्ते, २अन्य-मनस्के च। "पयोधरेणोरसि काचिदुन्मनाः" माघः। 'उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः" रघुः वा क्यङ्। उन्मनस्कोऽभवत्। भृशा० अभूततद्भावे क्यङ् सलोपश्च उन्मनायते उदमनायमानः "भ्रमरमुन्मनायितम्"। चिव-कृभ्वस्तिषु सलोपश्च उन्मनीकरोति उन्म-नीभवति उन्मनीस्यात्"।

**उन्मनी** स्त्री उन्मनस्+ङीप्। योगिनामवस्थाभेदे। "उन्मन्य-वस्थाधिगमाय विद्वन्नुपायमेकं तव निर्दिशामि। पश्यन्नुदा-सीनतया प्रपञ्चं सङ्कल्पमुन्मूलय सावधानः" आचार्यः।

**उन्मन्थ** पु० उद्+मन्थ-भावे घञ्। वधे २हिंसने ३उन्मर्द्दने च।

**उन्मन्थन** न० न० उद्+मन्थ-ल्युट्। ऊर्द्ध्वतो दण्डादिना विलोडने। करणे ल्युट्। तत्साधने २दण्डादौ।

**उन्मर्दन** न० उद्+मृद-ल्युट्। १उद्वर्त्तने सुश्रुतोक्ते वायु-प्रसादनार्थे २व्यापारभेदे। वायौ दुष्टपक्वस्य सुश्रु० "त्वङ्-मांसाश्रकशिरं प्राप्ते कुर्यात्तासृग्विमोक्षणम्। स्नेहोपना-हाग्निकर्म बन्धनोन्मर्द्दनानि च" मुखोपद्रवनिवारणार्थे सुश्रुतोक्ते ३व्यापारभेदे च" "वमनोन्मर्द्दनस्वेदलङ्घनञ्जपन-क्रियाः"। करणे ल्युट्। ४उन्मर्द्दनसाधने द्रव्यादौ। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्द्दनमनुलेपनमाञ्जनमुष्णी-षमित्यात्मने चाचार्य्याय च" आ०गृ०३,८,१, "उन्म-र्द्दनमभिषेकोऽवनीयैके" कात्या०१६,४,८। "उन्मर्द्दन-चन्दनादि" कर्कः।

**उन्मा** स्त्री उद्+मा-अ। ऊर्द्ध्वमाने। "सहस्रस्योन्मासि साहस्रोऽसि" यजु० १५,६५, "उन्मा" उन्मानं तुलादि वेददी०।

**उन्माथ** पु० उन्मथ्यतेऽनेन उद्+मथ-करणे घञ्। १आमिष-दानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे (फांद) इति ख्याते। भावे घञ्। २विलोड्योत्पादने, ३हिंसने च। "तत्रचागत्य चाण्डालोद्याख्यो मन्नकेतनः। प्रयोजयति चोन्माथं निलयमस्तं गते रवौ" भा०शा० १३८ अ०।

**उन्माद** पु० उद्+मद-आधारे घञ्। रोगभेदे स च सुश्रुते दर्शितो यथा "अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः॥मदय-न्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः॥ एकैकशः समस्तैश्च दोषैर-त्यर्थमूर्च्छितैः। मानसेन च दुःखेन स पञ्चविध उच्यते॥ विषाद्भवति षष्ठश्च यथास्वन्तत्र भेषजम्। स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च॥मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्। अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्॥ वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा। यस्य स्यादचिरे-णैवमुन्मादं सोऽधिगच्छति॥ रूक्षच्छविः परुषवाक् धमनी ततोवा श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः। आस्फोट-यन् पठति गायति नृत्यशीलो विक्रोशति भ्रमति चाप्य-निलप्रकोपात्॥ तृट्स्वेददाहबहुलो बहुभुग्विनिद्र-श्छायाहिमानिलजलान्तविहारसेवी। तीक्ष्णो हिमाम्बु-निचयेऽपि स वह्निशङ्की पित्ताद्दिवा नभसि पश्यति तारकाश्च॥ छर्द्यग्निसादसदनारुचिकासयुक्तो योषिद्वि-विक्तरतिरल्पमतिप्रचारः। निद्रापरोऽल्पकथनोऽल्पभुगुष्ण-सेवी रात्रौ भृशं भवति चापि कफप्रकोपात्॥ सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात्। सम्पूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं क्वचिदपि प्रवदन्ति साध्यम्॥ चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-र्वित्रासितस्य धनबान्धवसंक्षयाद्वा। गाढं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः॥ चित्रं स जल्पति मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चापि मूढः। रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृतेन भवेत् परासुः॥ स्निग्धं लिहन् मनुजमुन्मादार्त्तं विबोधयेत्"। एतद्व्याख्याच्छलेन तत्तत्विभागादि चोक्तं भावप्रकाशे "तत्र उन्मादस्य निरुक्ति-माह। "मदयन्त्युद्धता इत्यादि" सुश्रुतवाक्यम् यस्मादुद्धतो-द्धताः प्रवृद्धा दोषा उन्मार्गमाश्रिताः मदयन्ति चित्तं विक्षिपन्त्यस्मिन्। अतोऽयमुन्माद इतिकीर्त्तितः। स उन्मादः मानसोव्याधिः मनोवैकल्यकरत्वात्। तस्यैवावस्थाभेदेन लक्षणान्तरमाह। "स चाप्रवृद्धस्तरुणइत्यादि" सुश्रु० "उन्मादस्य विप्रकृष्टनिदानमाह। "विरुद्धदुष्टाशुचिभोजना-नि प्रधर्षणं देवगुरुद्विजानाम्। उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः"। दुष्टं भक्ष्यरसोत्रादिस-ष्ठितम्। अशुचि रजस्वलादिस्पृष्टम्। प्रधर्षणमभिभवः।

